TRIV

Sri Citrodayamanjari

No. IV.



# ऋक्संहिता

# RKSAMHITÂ

EDITED BY

K. SAMBASIVA SASTRI,

*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

TRIVANDRUM SANSKRIT SERIES.

No. CXV.

Śrī Citrodayamañjarī.

No. IV.

THE

# ṚKSAMHITĀ

WITH

the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya

EDITED BY

K. SĀMBAŚIVA ŚĀSTRĪ,
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

Part II.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF
*HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.*

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1935.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११५.

श्रीचित्रोदयमञ्जरी

ग्रन्थाङ्कः ४.

---

# ऋक्संहिता

## स्कन्दस्वामिकृतभाष्येण वेङ्कटमाधवार्यकृतव्याख्यानेन च सहिता

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण
के. साम्बशिवशास्त्रिणा
संशोधिता ।

---

द्वितीयो भागः ।

सा च
अनन्तशयने
महोन्नतमहामहिमश्रीचित्रावतारमहाराजशासनेन
राजकीयमुद्रणयन्त्रालये तदध्यक्षेण
मुद्रयित्वा प्रकाशिता ।

---

कोलम्बाब्दाः १११०, क्रैस्ताब्दाः १९३५.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवोदितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE.

This is the second part of Ṛksamhita with the Bhāṣya of Skandasvāmin and the gloss by Veṅkaṭamādhava, the first part of which has already been published from this office. This part, which goes up to the second Adhyāya of the first aṣṭaka is on a par with the first part in point of matter and manner. This volume, which is a treat to the cultured, dawned upon our attention, while we were eager to publish valuable works for the embellishment of the "Śrī Citrodaya Mañjarī Series". The Bhāṣya of Skandasvāmin, enriched by many unheard-of anecdotes from ancient myths and legends, and the great gloss of Veṅkaṭamādhava,— simple and terse and clear— are both unique adornments to this edition of the Samhita. Acknowledging, with gratitude, the services rendered by the very industrious Paṇḍits of this office, and awaiting the opportunity for publishing without delay the remaining parts, we offer this to the Public.

Trivandrum, 25 10 1109.

K. SĀMBAŚIVA ŚĀSTRI.

# निवेदना ।

द्वितीयोऽयं भाग ऋक्संहितायाः स्कन्दस्वामीयभाष्येण वेङ्कटमाधवीयव्याख्यानेन च सनाथायाः यस्याः प्रथमं भागमितः पूर्वमिह प्राकाशयम् । आद्यस्याष्टकस्य द्वितीयाध्यायगोचरोऽयमाकृत्या प्रकृत्या च प्रथमादन्यूनः । यावदपि त्वरिततरमखिलामोदसम्पन्नं ग्रन्थरत्नं प्रकाश्य श्रीचित्रोदयमञ्जरीं प्रसाधयितुमनसो मे मन्ये किमपि चक्षुषोः प्रभातमयं भागः सुमनसामुपहारः । नैकैरश्रुतचरैरैतिहासादिकथासन्दोहैरुपोद्बलितं श्रीस्कन्दस्वामीयं भाष्यं, लघुनापि सारगर्भेण टिप्पणीप्रायेण विशदीकरणेन महनीयं वेङ्कटमाधवीयं व्याख्यानं च सममस्याः संहिताया निकाममनितरसाधारणं किमप्याभरणम् । अस्याः प्रकाशनाय दृढतरप्रयत्नशालिभिरन्यैः पण्डितैः सुबहूपकृतं स्मरन्नेवमेवापरानप्यदसीयान् भागाननवशेषमचिरात् प्रकाशयितुमवसरं च प्रतीक्षमाणः सद्यः सतां समक्षमिममवतारयामि ।

अनन्तशयनम्,<br>२५–१०–१०९.

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# ऋक्संहिता

## भर्तृध्रुवसुतस्कन्दस्वामिकृतभाष्येण वेङ्कटार्यतनयमाधवार्यकृतव्याख्यानेन चोपेता पदपाठसहिता ।

---

(द्वितीयो भागः ।)

ओम् अयंदेवायजन्मनेस्तोमोविप्रेभिरासया ।
अकारिरत्नधातमः ॥ १ ॥

अयम् । देवाय । जन्मने । स्तोमः । विप्रेभिः । आसया । अकारि । रत्नऽधातमः ॥ १ ॥

### स्कन्दस्वामीयम् ।

आर्भवं प्रथमं सूक्तम् । ऋभुर्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा रथकारा बभूवुः । ते अतिशयवद्भिः कर्मभिर्देवत्वमीयुः । तेऽत्र साहचर्यादन्यतमवचनेनापि ऋभुशब्देन सर्वेऽभिधीयन्ते । तद्देवतं द्वितीयस्य प्रथमं सूक्तम् अयं देवायेत्येतत् । जन्मन इति मनिरयं कर्तरि सामर्थ्याच्चात्र भूते काले द्रष्टव्यः । देवाय जन्मन इति चोभयत्र बहुवचनस्य स्थाने एकवचनं देवेभ्यो जातेभ्यः । य ऋभवो मनुष्याः सन्तो देवा जाताः तदर्थमित्यर्थः । स्तोमः स्तुतिः विप्रेभिः मेधाविभिरस्माभिः । आसया, आसशब्दोऽत्र सामर्थ्याद् ऋग्वचनः, ऋग्लक्षणया वाचा । आसा उपासना वा परिचर्या । आसया हेतुना ।

G. P. T. 1190. 500. 21 9-1101 B

रस्य चेयं हेतुत्वेन विवक्षा । परिच(र्य? यार्थ)मित्यर्थः । अकारि कृतः ।
।. । रत्नधातमः अतिशयेन धनानां दाता येन स्तुता ऋभवोऽतिशयेन
दास्यन्तीत्यर्थः ॥ १ ॥

वेङ्कटमाधवीयम् ।

अथ देवाय जन्मने माधवो व्याचिकीर्षति ।
तत्रामन्त्रितशब्दानामादौ वृत्तिः प्रदर्श्यते ॥

आमन्त्रितागुदात्तत्वमुच्चैरामन्त्रणे भवेत् ।
नीचैरामन्त्रणे कार्ये पदं सर्वं निहन्यते ॥

अर्थस्वभावाद्वाक्यस्य मध्यस्थं तन्निहन्यते ।
ऋतेन मित्रावरुणा कवी नो मित्रावरुणा ॥

अर्थस्वभावादुच्चैस्त्वं क्वचिन्मध्येऽपि दृश्यते ।
तथैव नीचैस्त्वमपि तत्रोदाहरणे शृणु ॥

अहरच्छुनमन्धाय सा वृकीरिति वक्ष्यति ।
नरेति तत्राद्युदात्तमेवं हि परिदेवनम् ॥

इन्द्राग्नी द्यावापृथिवी यजुष्यस्मिन् निहन्यते ।
यजुष्यामन्त्रितेष्वन्तरोपधीरिति यत् पदम् ॥

अग्ने पावकरोचिषा घृताहवन दीदिवः ।
ग्रावो नेष्टः पिब ऋतुना सखायस्स्तोमवाहसः ॥

विश्वे देवासो मरुतो विश्वे यजत्रास्त आदित्याः ।
सर्वप्राधान्यभावोऽयमूह्यः प्राज्ञैरिति स्थितिः ॥

नामन्त्रितं कारकवद्वाक्यार्थेनान्वितं भवेत् ।
युवं नरो सुपाण्णे पेशो मयो अपेक्षसे ॥

य इमे तत्रोदाहरणे स्पष्टे सर्वं च तादृशम् ।
साविद्यमानवत्त्वे च एष हेतुरिति स्थितिः ॥

अयं देवाय । मेधातिथिः । अयं स्तोमो मनुष्यत्वमपहाय देवभूताय ऋभु-
गणाय मेधाविभिरस्माभिरास्येनातिशयेन रत्नदाता क्रियते ॥ १ ॥

य इन्द्रा॑य वचो॒युजा॑ ततक्षुर्मन॑सा॒ हरी॑ ।
शमी॑भिर्य॒ज्ञमा॑शत ॥ २ ॥

ये । इन्द्राय । वचःऽयुजा । ततक्षुः । मनसा । हरी इति । शमीभिः । यज्ञम् । आशत ॥ २ ॥

स्कन्दस्वामीयम् ।

ऋभवः किं कृतवन्तः । ये ऋभव इन्द्राय वचोयुजा वचनमात्रयोगिनौ ततक्षुः, तक्षतिः करोतिकर्मा, कृतवन्तः । केन । मनसा ध्यानमात्रेणैव । कौ । हरी । ये च शमीभिः । एकचमसचतुष्टयकरणादिभिः यज्ञम् आशत प्राप्ताः यज्ञियत्वं प्राप्ता इत्यर्थः । तद्वक्ष्यति—'एकं चमसं चतुरः कृणोतने'ति ॥ २ ॥

वेङ्कटमाधवीयम् ।

य इन्द्राय । य इन्द्रार्थं वचनमात्रेण रथे युज्यमानौ कृतवन्तो बुद्धिमहत्तयाश्वौ, ते शिल्पकर्मभिर्देवप्रीणनैर्यज्ञियं भागं प्राप्तवन्तः ॥ २ ॥

तक्षन्नासत्याभ्यांपरिज्मानंसुखंरथम् ।
तक्षन्धेनुंसबर्दुघाम् ॥ ३ ॥

तक्षन् । नासत्याभ्याम् । परिऽज्मानम् । सुऽखम् । रथम् । तक्षन् । धेनुम् । सबःऽदुघाम् ॥ ३ ॥

स्कन्दस्वामीयम् ।

ये च तक्षन् कृतवन्तः । नासत्याभ्याम् । अश्विनोरेको नासत्यनामा, दस्रनामापरः । साहचर्यात्त्विदमन्यतरशब्देनाप्युभयोरभिधानम् । अश्विनोरर्थाय । परिज्मानम्, अजेः गत्यर्थस्येदं रूपं, सर्वतोगामिनम् । सुखं रथम् । ये च तक्षन् धेनुम् । कीदृशम् । सबर्दुघां, सब(र्दु?)रित्यमृतस्याख्या, अमृतस्य दोग्ध्रीम् । कस्मै पुनरकुर्वन् । बृहस्पतये । कुत एतत् । 'बृहस्पतिर्विश्वरूपामुपाजते'त्यत्र बृहस्पतेर्विश्वरूपया सम्बन्धदर्शनात् । विश्वरूपाव्यपदेशस्य च 'रथं ये चक्रुः सुवृतं नरेष्ठां ये धेनुं विश्वजुवं विश्वरूपामि'त्यत्र धेन्वा दृष्टत्वात् ॥ ३ ॥

वेङ्कटमाधवीयम् ।

तक्षन्नासत्याभ्याम् । अकुर्वन्नश्विभ्यां परितो गन्तारं शोभनाक्षद्वारं रथं तक्षन् धेनुं च बृहस्पतयेऽमृतस्य दोग्ध्रीम् ॥ ३ ॥

---

१. 'नकर्मणा' क. पाठः.

युवानापितरापुनःसत्यमन्त्राऋजूयवः ।

ऋभवोविष्ट्यक्रत ॥ ४ ॥

युवाना । पितरा । पुनरिति । सत्यऽमन्त्राः । ऋजुऽयवः ।
ऋभवः । विष्टी । अक्रत ॥ ४ ॥

स्कन्दस्वामीयम् ।

ये च पितरा आत्मीयौ पितरौ । युवाना पुनः वृद्धभूतौ सन्तौ पुनस्तरुणौ । सत्यमन्त्रा , मन्त्रणं मन्त्रः वचनं, सत्यवचना. ऋजूयव. ऋजुकामाः ऋभवः । विष्टी । विष्ट्वीति कर्मनाम । तस्यायं छान्दसो वकारलोपः । तृतीयान्तं चेदमत्र द्रष्टव्यम् । कर्मणा वा अक्रत कृतवन्तः ॥ ४ ॥

वेङ्कटमाधवीयम् ।

युवाना पितरा । वृद्धावात्मीयौ पितरौ पुनस्तरुणावकुर्वन् । मन्त्रैरुच्यमानं सर्वं सत्यं येषां न भाक्तम् । ऋभव ऋजुकामा विष्टयः । तक्षणकर्मा विष्टिः[2] ॥ ४ ॥

संवोमदासोअग्मतेन्द्रेणचमरुत्वता ।

आदित्येभिश्चराजभिः ॥ ५ ॥

सम् । वः । मदासः । अग्मत । इन्द्रेण । च । मरुत्वता । आ-
दित्येभिः । च । राजऽभिः ॥ ५ ॥

स्कन्दस्वामीयम् ।

व इति प्रकृतानामृभूणाम् । मदासः समग्मत संगच्छन्ते । मदद्वारेण चेयं तद्वतामृभूणामेव सङ्गतिरुच्यते । यूयं सोमेन मत्ताः सङ्गच्छध्यमित्यर्थः । केन सह । इन्द्रेण मरुत्वता सह आदित्येभिश्च राजभिः दीप्तैः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

सं वो मदास । सङ्गता युष्माकं सोमास्तृतीये सवने मरुत्वतेन्द्रेणान्यैश्चादित्यै राजभिः ॥ ५ ॥

इति प्रथमस्य द्वितीये प्रथमो वर्गः ॥

---

१ 'पेता ।' क. ख. पाठः. २. 'ष्टिः' ख० घ पाठः

उतत्यंचमसंनवंत्वष्टुर्देवस्यनिष्कृतम् ।
अकर्तचतुरःपुनः ॥ ६ ॥

उत । त्यम् । चमसम् । नवम् । त्वष्टुः । देवस्य । निःकृतम् ।
अकर्त । चतुरः । पुनरिति ॥ ६ ॥

स्कन्दस्वामीयम् ।

उत त्यं चमसं नवमजीर्णं त्वष्टुर्देवस्य स्वभूतं निष्कृतम् । निरित्येष समित्येतस्य स्थाने । संस्कृतं परिनिष्ठितं सन्तमित्यर्थः । 'एकं चमसं चतुरः कृणोतने'ति देवसन्देशेनाग्नेर्वचनात् अकर्त कृतवन्तः स्थ चतुरः चमसान् पुनः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

उतत्यम् । अपिच तं नवं चमसं त्वष्ट्रा देवेन[1] संस्कृतमेकं सन्तं[2] पुनश्चतुरश्चमसान् कृतवन्तः स्थ ॥ ६ ॥

तेनोरत्नानिधत्तनत्रिरासाप्तानिसुन्वते ।
एकमेकंसुशस्तिभिः ॥ ७ ॥

ते । नः । रत्नानि । धत्तन । त्रिः । आ । साप्तानि । सुन्वते ।
एकम्ऽएकम् । सुशस्तिऽभिः ॥ ७ ॥

स्कन्दस्वामीयम् ।

य ईदृशाः स्थ, ते नः अस्माकं स्वभूताय रत्नानि धत्तन दत्त । मा च सकृदेव । किं तर्हि । त्रिः । आकारस्तु पदपूरणः । कियन्ति । साप्तानि । स्वार्थिकोऽत्र तद्धितः । सप्तैव साप्तानि । वर्गे वा तद्धितः । 'पञ्चद्दशतौ वर्गे वा' 'सप्तनोऽञ् छन्दसि' (५-१-६०, ६१) इति छान्दसत्वादाद्युदात्तत्वम् । सप्तकवर्गाणि साप्तानि । कतमानि ।

"छत्रं रथो मणिर्भार्या निधिरश्वो गजस्तथा ।
एतानि सप्त रत्नानि पूर्वेषां चक्रवर्तिनाम् ॥"

इति पुराणे श्रुतत्वात् छत्रादीनि । अथवा रत्नमिति धननाम । सुवर्णरजत-

1. 'देवे देवेन स' क. ख. पाठः. 2. 'तं पु' ख. पाठः.

माणिक्यमौक्तिकप्रभृतीनि सप्त धनानीति । त्रिरिति कृत्वोर्थीयश्रुतेरा इति चोपसर्गाद् योग्यक्रियाध्याहारः । त्रिरावृत्तानि सप्त एकविंशतिसुवर्णादिधनप्रकारं दधेत्यर्थः । कस्मै । सुन्वते यजमानाय । कीदृशानि रत्नानि । उच्यते । एकमेकमिति । निर्धार्यमाणश्रुतेर्निर्धारणसंबन्धो येषामिति शब्दोऽत्राध्याहर्तव्यः । सुशस्तिभिरिति तृतीयाश्रुतेर्युक्तशब्दः । येषामेकैकं सुशस्तिभिः शोभनाभिः प्रशंसाभिर्युक्तम् अत्यन्तोत्कृष्टमित्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

ते नो रत्नानि । तेऽस्माकं रत्नान्याधत्त त्रिरावृत्तानि सप्तसंख्यान्येकविंशतिं सुन्वते यजमानायैकमेकं स्तुतिभिः । चतुर्दशाग्रयपशवः सप्त ग्राम्याः पशवस्तान्येकविंशतिरित्याहुः ॥ ७ ॥

अधारयन्त वह्नयोऽभजन्त सुकृत्यया ।

भागं देवेषु यज्ञियम् ॥ ८ ॥

अधारयन्त । वह्नयः । अभजन्त । सुऽकृत्यया । भागम् । देवेषु । यज्ञियम् ॥ ८ ॥

स्कन्दस्वामीयम् ।

अधारयन्त धारणं स्थिरीकरणं कालान्तरेणात्मनः स्थिरीकृतवन्तः । वह्नयः वोढारः सर्वकर्मणामृभवः अभजन्त सेवितवन्तः । इदानीं लब्धवन्तः कालान्तरे च स्थिरीकृतवन्त इत्यर्थः । केन । सुकृत्यया एकचमसचतुष्टयकरणादिकया क्रियया शोभनया । किम् । भागम् । क । देवेषु । निर्धारणे चेयं सप्तमी । देवानां मध्ये । यज्ञियं यज्ञार्हं हविर्भागमित्यर्थः । अथवा वह्नयोऽत्र हविषा वोढार ऋत्विजः । शोभनया संस्कारक्रियया शोभनैः संस्कारैः संस्कृतवन्तः आ च प्रदानकालाद् धारितवन्त इत्यर्थः । भागं देवेषु । षष्ठ्यर्थे सप्तमीयम् । हविर्भागं देवानामृभूणां यज्ञार्हम् ॥ ८ ॥

वेङ्कटमाधवीयम् ।

अधारयन्त । मनुष्यत्वेऽपि न[२] मता वोढारस्त्वेकचमसचतुष्टयकरणादिकया शोभनया क्रियया देवेषु यज्ञियं भागमभजन्त ॥ ८ ॥

इति प्रथमस्य द्वितीये द्वितीयो वर्गः ॥

---

१. 'न च । मु' ख. पाठः. २ 'मा' ग. पाठः,

इहेन्द्राग्नीउपह्वयेतयोरित्स्तोममुश्मसि ।
तासोमंसोमपातमा ॥ १ ॥

इह । इन्द्राग्नी इति । उप । ह्वये । तयोः । इत् । स्तोमम् । उश्मसि । ता । सोमम् । सोमऽपातमा ॥ १ ॥

स्कन्दस्वामीयम् ।

ततोऽनन्तरमैन्द्राग्नम् । आर्भवानन्तरं सूक्तमैन्द्राग्नम् । इह यज्ञे इन्द्राग्नी अहमुपह्वये । इच्छब्दो यस्मादर्थे । तयोः स्तोममुश्मसि सर्वे वयं कामयामहे । कर्तुमित्यमिति वाक्यशेषः । एतज्ज्ञात्वा आगत्य ता तौ सोमं, द्वितीयानिर्देशात् पिबेतामिति वाक्यशेषः । सोमपातमा इति अतिशयेन सोमानां पातारौ ॥ १ ॥

वेङ्कटमाधवीयम् ।

इहेन्द्राग्नी । इहेन्द्राग्नी उपह्वये । तयोरेव स्तोमं च कामयामहे । तौ हि सोममतिशयेन पातारौ । विरम्याभिधानादेकवचनबहुवचनयोः सङ्गतिः ॥ १ ॥

तायज्ञेषुप्रशंसतेन्द्राग्नीशुंभतानरः ।
तागायत्रेषुगायत ॥ २ ॥

ता । यज्ञेषु । प्र । शंसत । इन्द्राग्नी इति । शुंभत । नरः । ता । गायत्रेषु । गायत ॥ २ ॥

स्कन्दस्वामीयम् ।

ता तौ प्रकृतौ यज्ञेषु प्रशंसत ऋग्लक्षणाभिः शस्त्रस्तुतिभिः प्रकर्षेण स्तुत । तौ कौ । इन्द्राग्नी । शुम्भत, शुम्भ शोभार्थे, शोभध्वम् । हे नरः ! मनुष्याः ! ऋत्विजः ! । ऋत्विजो यूयमिन्द्राग्नी देवता. स्तुतवन्तः शोभन्ते न तूष्णीमासीनाः । अथवा 'दाता राधांसि शुम्भती'ति प्रयोगदर्शनाच्छुम्भतिर्दानार्थः । दत्त च ताभ्यां सोममित्यर्थः । तावेव गायत्रेषु । गीयन्ते तानीति गायत्राणि सामानि । तृतीयार्थे चेयं सप्तमी । सामभिः स्तोत्रलक्षणैः । गायत स्तुत ॥ २ ॥

वेङ्कटमाधवीयम् ।

ता यज्ञेषु । तौ यज्ञेषु प्रशंसतेन्द्राग्नी अलङ्कुरुत च स्तोत्रैस्तावेव गायत्रसामसु च गायत नरः ॥ २ ॥

नामित्रस्यप्रशस्तयइन्द्राग्नीताहवामहे ।
सोमपासोमपीतये ॥ ३ ॥

ता । मित्रस्य । प्रऽशस्तये । इन्द्राग्नी इति । ता । हवामहे । सोमऽपा । सोमऽपीतये ॥ ३ ॥

स्कन्दस्वामीयम् ।

मित्रस्य मित्रो देवतामात्रोपलक्षणार्थः । तौ देवतानां प्रशस्तये । होतृत्वादभिगतो देवता स्तोष्यतीत्येवमर्थम् इन्द्राग्नी हवामहे । पुनस्तच्छब्दश्रुतेर्मित्रस्य प्रशस्तयं सोमपा सोमपौ सोमपीतये सोमपानार्थमपि हवामहे ॥ ३ ॥

वेङ्कटमाधवीयम् ।

ता मित्रस्य । तौ मित्रस्य प्रशस्तये तयोरितरेतरविषयां मैत्रीं स्तोतुमिन्द्राग्नी तौ हवामहे सोमपानशीलौ सोमपानाय च ॥ ३ ॥

उग्रासन्ताहवामहउपेदंसवनंसुतम् ।
इन्द्राग्नीएहगच्छताम् ॥ ४ ॥

उग्रा । सन्ता । हवामहे । उप । इदम् । सवनम् । सुतम् । इन्द्राग्नी इति । आ । इह । गच्छताम् ॥ ४ ॥

स्कन्दस्वामीयम् ।

उग्रा उग्रौ क्रूरौ शत्रूणामुपरि । सन्ता । सच्छब्दः प्रशंसावचनः । सत्पुरुषः, सद्रव्यः सदश्व इति यथा । प्रशस्तौ हवामहे । उपेद सवन सुतम् उपशब्दोऽत्र प्रतिशब्दस्यार्थे । सवनमिति यज्ञनाम । यज्ञं सुतं च सोमं प्रति । अथवा सवनशब्दः सूयते संदिति सवनं सोमलक्षणं हविराह, न यज्ञनाम । इदं सोमलक्षणमभिषुतं हविः प्रति । एतज्ज्ञात्वा (हवी?)

१. 'त' ग पाठः.

इन्द्राग्नी आ इह गच्छताम्। उपेदं सवनं सुतमित्येतत् पदचतुष्टयं 'सेमं नः स्तोममागहि'त्यत्र पठितम्। इह पुनः पदका(ले ? रैः)पठ्यतेऽर्थभेदात्। कथमर्थभेदः 'सेमं नः स्तोममागहि' इत्यत्र क्रियापदानन्वयात् स्तोमं सुतमिति चानयोः उपागमनकर्मण्येव सम्भवादुपशब्द उपसर्गः स्वार्थवृत्तिः। न कर्मप्रवचनीयप्रतिशब्दार्थे इदं सवनमित्यपि स्तोमं सुतमित्येतयोर्विशेषणार्थाधिकरणसप्तम्यर्थे प्रथमा अस्मिन् यज्ञे स्तोमं सुतं च सोममुपागच्छेत्यर्थः। इह पुनरिन्द्राग्नी एह गच्छतामिति क्रियाशब्दस्य व्यवहितत्वात् सुतमित्यस्य कर्मणो हवामह इति पूर्वेणेन्द्रा(ग्नी ? ग्नि)कर्मकेणाह्वानेनासम्बन्धात्वागच्छतामित्यनेन सम्बन्धे इहशब्दस्य इदं सवनमितीदंशब्देन सप्तम्यर्थप्रवृत्तेन पौनरुक्त्यप्रसङ्गादुपश(ब्दः ? ब्द)कर्मप्रवचनीययोगलक्षणा(थं ? च) द्वितीया। इमं यज्ञं सुतं च सोमं प्रति सोमलक्षणं वा अभि(ष्टु ? षु)तं हविः प्रति हवामहे इति। अथ तु तत्रापीदं सवनमित्युपागमनकर्मणि द्वितीया व्याख्यायते स्तोममिमं च यज्ञं सुतं च सोमम् उपाग(च्छते ? च्छे)ति, ततोऽस्य पदत्रयस्य पुनरिहाध्ययने पदकाराभिप्रायः पर्येष्यः॥ ४॥

वेङ्कटमाधवीयम्।

यथा सन्तौ। उभौ भवन्तौ हवामहे इमं सुतं सोममुपे समीपे तावेन्द्राग्नी इहागच्छताम्॥ ४॥

**तामहान्तासदस्पतीइन्द्राग्नीरक्षउब्जतम्।**
**अप्रजाःसन्त्वत्रिणः॥ ५॥**

ता। महान्ता। सदस्पती इति। इन्द्राग्नी इति। रक्षः। उब्जतम्। अप्रजाः। सन्तु। अत्रिणः॥ ५॥

स्कन्दस्वामीयम्।

तच्छब्दश्रुतेर्मध्यमपुरुषयोगाच्च मन्त्रस्य प्रत्यक्षकृतत्वान्महान्ता सदस्पती इत्यनयोश्चामन्त्रितयोस्तत्सम्बन्धी यच्छब्दोऽध्याहार्यः। (सो ? यौ) युवां महान्तौ सदस्पती सदः प्रसिद्धं यज्ञगृहं तस्य स्वामिनौ तौ हे इन्द्राग्नी! । रक्ष उब्जतम्। उब्जतिरत्र सामर्थ्याद् वधार्थः न्यग्भावार्थो वा रक्षांसि हतं, न्यग्भूतानि वास्माकं (ह ?) कुरुतम्। अप्रजाः प्रजावर्जिताश्च सन्तु अत्रिणः। 'अद भक्षणे'। भक्षयितारः हिंसितारोऽस्माकम्॥ ५॥

१. 'कर्कर्मणा' ख. पाठः. २. 'यप्राते स' ग. पाठः. ३. 'श्च' ग. पाठः.

वेङ्कटमाधवीयम् ।[1]

ता महान्ता । तौ महान्ताविल्येतावान् परोक्षम् । सदस्पती इन्द्राग्नी रक्षो हतम् । अप्रादुर्भूता भवन्त्वदनशीला राक्षसा अप्रजातौ ॥ ५ ॥

तेनंसत्येनंजागृतमधिप्रचेतुनेपदे ।

इन्द्राग्नीशर्मयच्छतम् ॥ ६ ॥

तेनं । सत्येनं । जागृतम् । अधि । प्रऽचेतुने । पदे । इन्द्राग्नी इति । शर्म । यच्छतम् ॥ ६ ॥

स्कन्दस्वामीयम् ।

तेन तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । येनान्येषामपि स्तोतॄणा यष्टॄणा च जागृथ, तेन सत्येनाविसंवादिना स्तोत्रेण स्वसामर्थ्येन वा ममापि जागृतम् । (ज ! जा)गर(ण)मप्रमादः । सर्वथैऽप्यप्रमत्तौ भवतम् । किञ्च अधि उपरि सर्वस्य प्रचेतुने पदे । प्रकर्षेण यच्चेतयति ज्ञापयति प्रकाशयते वा तत् (प्रचेतुनम् ! प्र)चेतुने पदे मम जागृतम् अप्रमत्तौ भवतम् । मां प्रचेतुन पदं प्रापयतमित्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

तेन सत्येन । यत् पदं ज्योतिषाँ मानुषान् प्रज्ञापयति तस्मिन् त्वदीय आधिपत्ये यथापूर्वं तेन सत्येन जागरणं कुरुतम् इन्द्राग्नी ! सुखं च यच्छतम् ॥ ६ ॥

इति प्रथमस्य द्वितीये तृतीयो वर्गः ॥

---

प्रातर्युजाविबोधयाश्विनावेहगच्छताम् ।

अस्यसोमस्यपीतये ॥ १ ॥

प्रातःऽयुजा । वि । बोधय । अश्विनौ । आ । इह । गच्छताम् । अस्य । सोमस्य । पीतये ॥ १ ॥

---

१. 'ता मा ।' ग. पाठः. २. 'न म' ख पाठः. ३. 'षां' ग. घ. पाठः.

स्कन्दस्वामीयम् ।

तृतीयस्यादिराश्विनः । तृतीयस्य सूक्तस्यादि प्राग्भिरण्यपाणिमूतय इत्यश्विदेवतम् । प्रातर्यावश्विनौ महयागेन युज्येते तौ प्रातर्युजौ अमुष्य यजमानस्य यज्ञे गन्तव्यमित्येतद् विबोधय । आत्मन एवायमन्तरात्मनः प्रैषणादभेर्वा होतृत्वात् । विबोधितौ चाश्विनौ आ इह गच्छताम् । किमर्थम् । अस्याश्विनमहास्यस्य सोमस्य पीतये ॥ १ ॥

वेङ्कटमाधवीयम् ।

प्रातर्युजा । प्रातर्गमनायोद्युक्तावश्विनौ स्तोतर्विबोधय । ताविहागच्छताममुं सोमं पातुम् ॥ १॥

यासुरथारथीतमोभादेवादिविस्पृशा ।
अश्विनाताहवामहे ॥ २ ॥

या । सुऽरथा । रथिऽतमा । उभा । देवा । दिविऽस्पृशा ।
अश्विना । ता । हवामहे ॥ २ ॥

या सुरथा यौ सुरथौ, रथीतमा सारथिरत्र रथ्युच्यते अतिशयेन सारथी, उभा देवा, दिविस्पृशा दिवि स्प्रष्टारौ गन्तारावित्यर्थः । अश्विना ता हवामहे ॥ २ ॥

वेङ्कटमाधवीयम् ।

या सुरथा । यौ सुरथावतिशयेन रथस्य नेतारौ भवतः, उभौ द्युस्थानावश्विनौ । तौ हवामहे ॥ २ ॥

यावांकशामधुमत्यश्विनासूनृतावती ।
तयायज्ञंमिमिक्षतम् ॥ ३ ॥

या । वाम् । कशा । मधुऽमती । अश्विना । सूनृताऽवती । तया । यज्ञम् । मिमिक्षतम् ॥ ३ ॥

स्कन्दस्वामीयम् ।

या वां युवयोः कशा । अ(श्विन्यो?श्वो) यया तोद्यते सा कशोच्यते ।

कीदृशी। मधुमती। मध्वित्युदकनाम, तद्वती। वृष्टिकारिणीत्यर्थः। हे अश्विना! सूनृतावती सूनृता वाक् तद्वती च। शब्दकारिणीत्यर्थ। त(दा? या) मदीयं यज्ञं मिमिक्षतम्। म्यक्षतेर्गतिकर्मण एतद् रूपम्। गच्छतम्। अथवा करोति वाङ्नाम। या युवयोर्गर्जितलक्षणा वागुदकवती सूनृतावती च। सूनृतेत्यन्ननाम। सस्यलक्षणेनान्नेन जनयितव्येन तद्वती। सस्यानां जनयित्रीत्यर्थ। अथवा सूनृतं प्रियमुच्यते तद्वती श्रवणसुखेत्यर्थ। तया यज्ञं मिमिक्षतम्। 'मिह सेचने'। उदकेन सिञ्चत वर्षतमित्यर्थ॥ ३॥

वेङ्कटमाधवीयम्।

या वा कशा। या युवयोरश्वाजनि, (?)मधु क्षरन्ती शब्दवती, तयास्माकं यज्ञं सिञ्चतम्॥ ३॥

नहिवामस्तिदूरकेयत्रारथेनगच्छथः।

अश्विनासोमिनोगृहम्॥ ४॥

नहि। वाम्। अस्ति। दूरके। यत्र। रथेन। गच्छथः। अश्विना। सोमिनः। गृहम्॥ ४॥

स्कन्दस्वामीयम्।

नहि वा युवयो अस्ति दूरके दू(रके? रे) नामास्ति, यत्र रथेन गच्छथ। यदपि दूरे तदपि (दूरीथ? रथे)न शीघ्रेमेन गच्छथ इत्यर्थ। किं तत्। उच्यते। अश्विना सोमिन सोमवतो यष्टु· स्वभूत गृहम्॥ ४॥

वेङ्कटमाधवीयम्।

नहि वामस्ति। नहि युवयोरस्ति दूरे किञ्चिद् गृह यत्र युवा रथेन गच्छथोऽश्विनौ। यजमानस्य गृह रथेन शीघ्र गच्छतोर्न दूरे भवतीति॥ ४॥

हिरण्यपाणिमूतयेसवितारमुपह्वये।

सचेत्तादेवतापदम्॥ ५॥

हिरण्यऽपाणिम्। ऊतये। सवितारम्। उप। ह्वये। सः। चेत्ता। देवता। पदम्॥ ५॥

### स्कन्दस्वामीयम् ।

हिरण्यपाणिं सावित्री तिस्रश्चाप्यत उत्तराः । हिरण्यपाणिमितीयं पराश्च (त ? ति)स्रः सावित्र्यः । हिरण्मयौ पाणी यस्य स हिरण्यपाणिः । अत्र शाट्यायना इतिहासमाम्नायमधीयते — 'अथ यत्र ह तद्देवयज्ञमतन्वत पित्रे प्राशित्रं परिजह्रुस्तस्य पाणी प्रचिच्छेद । तस्मै हिरण्मयौ प्रतिदधुस्तस्माद्धिरण्यपाणि-रि'ति । हिरण्यपाणिमूतये तर्पणाय सवितारमुपह्वये । किं कारणम् । उच्यते । यस्मात् स चेत्ता । 'चिती संज्ञाने' सम्यक् ज्ञाता नान्यः कश्चित् । देवता । पञ्चम्यर्थे प्रथमैषा । देवतानां पदं स्थानम् । अथवा स चेत्ता स एव देवता स एव पदं स्थानमाश्रयो यष्टृणामिति ॥ ५ ॥

### वेङ्कटमाधवीयम् ।

हिरण्यपाणिम् । "प्राशित्रं सवितुः पाणी प्रचिच्छेद । तस्मै[1] [illegible] देवा हिरण्मयौ पाणी प्रत्यदधुरि"ति शाट्यायनब्राह्मणम् । सवितारमूतये उपह्वये । स देवताः प्रकाशं कुर्वन् पदं मार्गं च चेतयति पदनिधानयोग्यं देशं प्रकाशयति ॥ ५ ॥

इति प्रथमस्य द्वितीये चतुर्थो वर्गः ॥

अपांनपातमवसेसवितारमुपस्तुहि ।
तस्यव्रतान्युश्मसि ॥ ६ ॥

अपाम् । नपातम् । अवसे । सवितारम् । उप । स्तुहि । तस्य । व्रतानि । उश्मसि ॥ ६ ॥

### स्कन्दस्वामीयम् ।

नपाच्छब्दोऽपत्यनाम । इह च सामर्थ्यात् पुत्रे वर्तते । न पौत्रे । अपां पुत्रमित्यर्थः । कुत एतत् । सवितुरुदयो जन्म । तत् + + + साक्षादद्भ्यः । 'अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशती'ति श्रुतेः । अथवा अद्भ्यो वैद्युताग्निर्जायते अग्नेः सविता । 'अग्नेर्वा आदित्यो जायत' इति श्रुतेः । अथवा 'आपो वा इदमग्र आसन्नि'ति श्रुतेरद्भ्यः प्रजापतिरजायत । प्रजापतेः सविता । तेनायमपां पौत्र एव । तमपांनपातं पौत्रम् अवसे तर्पणाय पालनाय वा सवितारमुपस्तुहि । आत्मन एवायमन्तरात्मनः प्रैषः । किं कारणम् । तस्य व्रतानि कर्माणि यागाख्यानि उश्मसि सर्वे वयं कामयामहे । कर्तुमिति वाक्यशेषः । यस्मात् तं यष्टुमिच्छाम इत्यर्थः ॥ ६ ॥

1. 'हमै दे', ग. पाठः.

वेङ्कटमाधवीयम् ।

अपानपातम् । योऽद्य प्रातरद्येति त सवितारमुपस्तुहि । तस्य कर्माणि श्रोतु कामयामहे ॥ ६ ॥

विभक्तारंहवामहेवसोश्चित्रस्यराधसः ।

सवितारंनृचक्षसम् ॥ ७ ॥

विऽभक्तारम् । हवामहे । वसोः । चित्रस्य । राधसः । सविता-रम् । नृऽचक्षसम् ॥ ७ ॥

स्कन्दस्वामीयम् ।

यस्मै यावद् योग्य तस्मै तावत प्रदातार त विभक्तार हवामहे । वसो-श्चित्रस्य राधस । 'राध साध ससिद्धौ' सर्वार्थसिद्धिकरस्य । सवितार नृचक्षसम् मनुष्यान् द्रष्टार मनुष्याणा शुभाशुभाना कर्मणा प्रत्यवेक्षितारमित्यर्थ ॥ ७ ॥

वेङ्कटमाधवीयम् ।

विभक्तारम् । वासयितु पूज्यस्य धनस्य दातार हवामहे सवितार मनुष्याणां द्रष्टारम् ॥ ७ ॥

सखायआनिषीदतसवितास्तोम्योनुनः ।

दातारार्धांसिशुंभति ॥ ८ ॥

सखायः । आ । नि । सीदत । सविता । स्तोम्यः । नु । नः । दाता । राधांसि । शुंभति ॥ ८ ॥

स्कन्दस्वामीयम् ।

हे सखाय ! अध्वर्यव ! । आनिषीदत । आ इत्यर्वागर्थे । अर्वाक् मत्स-मीपे प्रतिगरदानार्थं निषीदत । किं कारणम् । यस्मात् सविता स्तोम्य स्तोमार्ह स्तोतव्य नु क्षिप्र न अस्माकम् । किं कारणम् । यस्माद् दाता सविता राधासि । शुम्भतिर्दानार्थोऽत्र सामर्थ्यात् । किं हि दाता रा(धस[१] धासि । कि)मन्यत् कुर्यात् अन्यतो दानाद् ददाति । स्तोतृभ्य इत्यर्थ । अथवा दाता

१ 'सिद्ध' क ख पाठ.

यजमानः राधांसि सोमलक्षणानि धनानि । शुम्भतिस्तु शोभनार्थ एव सामर्थ्यात्वन्तर्णीतण्यर्थः, लट् च भूते काले । यस्माद् यजमानः सोमान(म ?)भिषवादिभिः संस्कारैः शोभितवान् संस्कृतवानित्यर्थः ॥ ८ ॥

वेङ्कटमाधवीयम् ।

सखायः । प्रस्तोतृप्रभृतय आगत्योपविशत सवितास्माकं स्तोतव्यः क्षिप्रमन्नानां दाता यजमान एनं स्तुतिभिरलङ्करोति हविर्भिर्वेति ॥ ८ ॥

अग्नेपत्नीरिहावहदेवानामुशतीरुप ।
त्वष्टारंसोमपीतये ॥ ९ ॥

अग्ने । पत्नीः । इह । आ । वह । देवानाम् । उशतीः । उप । त्वष्टारम् । सोमऽपीतये ॥ ९ ॥

स्कन्दस्वामीयम् ।

एकाग्नेः । एका ऋगाग्नेयी । हे अग्ने ! पत्नीरिह कर्मणि उपावह । कस्य पत्नीः । देवानाम् । उशतीः कामयमानाः सामर्थ्याद् देवान् वा यजमानं वा । त्वष्टारं च । किमर्थम् । सोमपीतये । आवोढुरग्नेरेवात्र प्राधान्यं, न देवपत्नीनां त्वष्टुश्चाग्नेयत्वम् ॥ ९ ॥

वेङ्कटमाधवीयम् ।

अग्ने पत्नीः । अग्ने ! देवपत्नीरिहोपावह कामयमानाः । त्वष्टारं च सोमपानार्थम् ॥ ९ ॥

आग्नाअग्नइहावसेहोत्रांयविष्ठभारतीम् ।
वरूत्रींधिषणांवह ॥ १० ॥

आ । ग्नाः । अग्ने । इह । अवसे । होत्राम् । यविष्ठ । भारतीम् । वरूत्रीम् । धिषणाम् । वह ॥ १० ॥

स्कन्दस्वामीयम् ।

द्वे तु देवीनाम् । द्वे एते ऋचौ देवीनाम् । आ इत्युपसर्गोऽन्त्येन वहेत्येतेन सम्बन्धयितव्यः । ग्ना इति स्त्रीनाम । हे अग्ने ! स्त्रिय आवह । इह

1. 'च । तस्मादग्ने' ग. पाठः ।

कर्मणि अवसे पालनाय तर्पणाय वा । कतमाम् । होत्राम् । हूयतेऽसाविति होत्राग्नेर्दीप्तिः पत्नी वा ताम् । हे यविष्ठ ! युवतम ! भारतीं, भारत आदित्यस्तस्य भा पत्नी वा भारती तां च । वरूत्रीं धिषणाम् । धिषणेति वाङ्नाम । वरणीयां च वाचम् आवह ॥ १० ॥

वेङ्कटमाधवीयम् ।

आग्ना अग्ने । आवहेहाग्ने देवपत्नी रक्षणाय होत्रां युवतमादित्यस्य पत्नीं वरणीयां सरस्वतीं च ॥ १० ॥

इति प्रथमस्य द्वितीये पञ्चमो वर्गः ॥

अभि नो देवीरवसा महः शर्मणा नृपत्नीः ।
अच्छिन्नपत्राः सचन्ताम् ॥ ११ ॥

अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः । अच्छिन्नऽपत्राः । सचन्ताम् ॥ ११ ॥

स्कन्दस्वामीयम् ।

(आ इ [1] अभी)त्युपसर्गोऽन्त्येन सचन्तामित्याख्यातेन सम्बन्धयितव्यः । नः अस्मान् देवी होत्राभारतीधिषणा अवसा पालनेन तर्पणेन वा । महः । तृतीयार्थे षष्ठ्येषा । महता शर्मणा गृहेण सुखेन वा । नृपत्नीः । नरो देवताः तदाकारणत्वात्, तेषां पत्न्यः । होत्राग्नेः पत्नी, भारत्यादित्यस्य पत्नी, वाग् यज्ञस्य पत्नी । अथवा मनुष्याणां पालयित्र्यो नृपत्नीः । अच्छिन्नपत्राः अश्रान्तवाहनाः अभिसचन्ताम् अभिसेवन्ताम् । अवो महच्छर्म चास्माकं कुर्वन्त्वित्यर्थः । सचर्त्युच्छतीति गतिकर्मसु पाठात् सचतिरत्र गत्यर्थः । अवसा महता च शर्मणा अभिगच्छन्त्वस्मान् अवो महच्छर्मास्मानभिगच्छ(न्त्व ! त्वि)-त्यर्थः ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अभि नः । अभिसचन्तामस्मान् देव्यो रक्षणेन महता च सुखेन[3] देवानां पत्न्योऽच्छिन्नपत्राः ॥ ११ ॥ उत्तरा निगदसिद्धा इति ॥

इहेन्द्राणीमुप ह्वये वरुणानीं स्वस्तये ।
अग्नायीं सोमपीतये ॥ १२ ॥

---

१. 'रत्वा' ग. पाठः. २. 'स्युदृच्छ' ख. पाठः. ३. 'न सह दे' ग. पाठः.

इह । इन्द्राणीम् । उप । ह्वये । वरुणानीम् । स्वस्तये । अग्नायीम् । सोमऽपीतये ॥ १२ ॥

स्कन्दस्वामीयम् ।

द्वादश्यां तिस्रः (ईरीताः) ।

इन्द्राणी वरुणानी चाग्नायी (ताः ? ताश्च) पृथक् स्तुताः ॥

सूक्तस्य द्वादश्यामस्यामृचि तिस्रः स्त्रियो देवताः । कतमाः । इन्द्राणी वरुणानी चा(मे ? ग्ना)यी च । ताश्च पृथक् स्तुताः, न सह । इह कर्मणि इन्द्राणीमिन्द्रस्य पत्नीमुपह्वये । वरुणानीं वरुणस्य पत्नीम् । किमर्थम् । स्वस्तये अविनाशायात्मनः । अग्नायीमग्नेश्च पत्नीम् । नच स्वस्तये एव केवलायै, किन्तर्हि, सोमपीतये च । अस्मान् रक्षिष्यन्ति सोमं च पास्यन्तीत्येवमर्थमित्यर्थः ॥ १२ ॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।

पिपृतां नो भरीमभिः ॥ १३ ॥

मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरीमऽभिः ॥ १३ ॥

स्कन्दस्वामीयम् ।

द्यावापृथिव्यौ द्वे ऋचौ । द्वे एते ऋचौ द्यावापृथिवीदेवते । मही द्यौः पृथिवी च नः इमं यज्ञं मिमिक्षताम् । (म्य)क्षतेर्गतिकर्मण एतद्रूपम् । गच्छताम् । गत्वा च पिपृताम् । 'पृ पालनपूरणयोरि'त्यस्यैतत् छान्दसं ह्रस्वत्वम् । पूरयतां तर्पयतामित्यर्थः । नः अस्मान् भरीमभिः भरणसमर्थैरन्नै रसैश्च ॥ १३ ॥

वेङ्कटमाधवीयम् ।

मही द्यौः । महत्यौ द्यावापृथिव्यावस्माकमिमं यज्ञमागच्छतां[3] पारयेतां चास्मान् भरणैः ॥ १३ ॥

तयोरिद् घृतवत्पयो विप्रा रिहन्ति धीतिभिः ।

गन्धर्वस्य ध्रुवे पदे ॥ १४ ॥

---

१. 'घः स्त्रियः । इ', २. 'मे' क. ख. पाठः. ३. 'च्छे' ग. पा ठः.

कर्मणि अवसे पालनाय तर्पणाय वा । कतमाम् । होत्राम् । हूयतेऽसाविति होत्रामेदींति पत्नी वा ताम् । हे यविष्ठ ! युवतम[1] भारतीं, भारत आदित्यस्तस्य भा पत्नी वा भारती ता च । वरूत्रीं धिषणाम् । धिषणेति वाङ्नाम । वरणीया च वाचम् आवह ॥ १० ॥

वेङ्कटमाधवीयम् ।

आग्ना अग्ने । आवहेहाग्ने देवपत्नी रक्षणाय होत्रा युवतमाग्नित्यस्य पत्नीं वरणीया सरस्वतीं च ॥ १० ॥

इति प्रथमस्य द्वितीये पञ्चमो वर्गः ॥

अभिनोदेवीरवसामहःशर्मणानृपत्नीः ।
अच्छिन्नपत्राःसचन्ताम् ॥ ११ ॥

अभि । नः । देवीः । अवसा । महः । शर्मणा । नृऽपत्नीः ।
अच्छिन्नऽपत्राः । सचन्ताम् ॥ ११ ॥

स्कन्दस्वामीयम् ।

(आ इ[2] अभी)त्युपसर्गोऽन्त्येन सचन्तामित्याख्यातेन सम्बन्धयितव्य । न अस्मान् देवी होत्राभारतीधिषणा अवसा पालनेन तर्पणेन वा । मह । तृतीयार्थे षष्ठ्येषा । महता शर्मणा गृहेण सुखेन वा । नृपत्न्या । नरो देवता तदाकारणत्वात्, तेषा पत्नी । होत्रामे पत्नी, भारत्यादित्यस्य पत्नी, वाग् यज्ञस्य पत्नी । अथवा मनुष्याणा पालयित्र्यो नृपत्नी । अच्छिन्नपत्रा अश्रान्तवाहना अभिसचन्ताम् अभिसेवन्ताम् । अवो महच्छर्म चास्माक कुर्वन्त्वित्यर्थ । सचत्सुच्छतीति गतिकर्मसु पाठात् सचतिरत्र गत्यर्थ । अवसा महता च शर्मणा अभिगच्छन्त्वस्मान् अवो महच्छर्मास्मानभिगच्छ(न्त्वि[3] त्वि)त्यर्थ ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अभि न । अभिसचन्तामस्मान् देव्यो रक्षणेन महता च सुखेन देवानां पत्न्यो ऽच्छिन्नपत्रा ॥ ११ ॥ उत्तरा निगदसिद्धा इति ॥

इहेन्द्राणीमुपह्वयेवरुणानींस्वस्तये ।
अग्नायींसोमपीतये ॥ १२ ॥

१ 'रता' ग पाठ. २. 'त्युपूच्छ' ख पाठ ३ 'न सद्द दे' ग पाठ

इह । इन्द्राणीम् । उप । ह्वये । वरुणानीम् । स्वस्तये । अ-ग्नायीम् । सोमऽपीतये ॥ १२ ॥

स्कन्दस्वामीयम् ।

द्वादश्यां तिस्रः (ईरिताः) ।

इन्द्राणी वरुणानी चाग्नेयी (ताः ? ताश्च) पृथक् स्तुताः ॥

सूक्तस्य द्वादश्यामस्यामृचि तिस्रः स्त्रियो देवताः । कतमाः । इन्द्राणी वरुणानी चा(ग्ने ? ग्ना)यी च । ताश्च पृथक् स्तुताः, न सह । इह कर्मणि इन्द्राणीमिन्द्रस्य पत्नीमुपह्वये । वरुणानीं वरुणस्य पत्नीम् । किमर्थम् । स्व-स्तये अविनाशायात्मनः । अग्नायीमग्नेश्च पत्नीम् । नच स्वस्तये एव केवलायै, किन्तर्हि, सोमपीतये च । अस्मान् रक्षिष्यन्ति सोमं च पास्यन्तीत्येवमर्थमि-त्यर्थः ॥ १२ ॥

मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षताम् ।

पिपृतां नो भरीमभिः ॥ १३ ॥

मही । द्यौः । पृथिवी । च । नः । इमम् । यज्ञम् । मिमिक्षताम् । पिपृताम् । नः । भरीमऽभिः ॥ १३ ॥

स्कन्दस्वामीयम् ।

द्यावापृथिव्यौ द्वे ऋचौ । द्वे एते ऋचौ द्यावापृथिवीदेवते । मही द्यौः पृथिवी च नः इमं यज्ञं मिमिक्षताम् । (म्य)क्षतेर्गतिकर्मण एतद्रूपम् । गच्छताम् । गत्वा च पिपृताम् । 'पृ पालनपूरणयोरि'त्यस्यैतत् छान्दसं ह्रस्वत्वम् । पूरयतां तर्पयतामित्यर्थः । नः अस्मान् भरीमभिः भरणसमर्थैरन्नै रसैश्च ॥ १३ ॥

वेङ्कटमाधवीयम् ।

मही द्यौः । महत्यौ द्यावापृथिव्यावस्माकमिमं यज्ञमागच्छतां[3] पारयेतां चास्मान् भरणैः ॥ १३ ॥

तयोरिद् घृतवत् पयो विप्रा रिहन्ति धीतिभिः ।

गन्धर्वस्य ध्रुवे पदे ॥ १४ ॥

---

१. 'स्रः स्त्रियः । इ', २. 'ग्ने' क. ख. पाठः. ३. 'च्छे' ग. पा ठः.

तयोः । इत् । घृतऽवत् । पयः । विप्राः । रिहन्ति । धीतिऽभिः । गन्धर्वस्य । ध्रुवे । पदे ॥ १४ ॥

स्कन्दस्वामीयम् ।

तयोर्द्यावापृथिव्यो स्वभूतं घृतवत् । 'घृ क्षरणदीप्त्यो '। क्षरण घृत तद्वत् । पय उदक विप्रा सर्वत्र विविध आप्ता मेधाविनो वा आदित्यरश्मय रिहन्ति आस्वादयन्ति धीतिभि कर्मभिर्गमनाख्ये । गत्वेत्यर्थ । क्व । गन्धर्वस्य ध्रुवे पदे । सुषुम्नो नाम सूर्यरश्मि , सात्र गोरुच्यते, तां धारयतीति गन्धर्वश्चन्द्रमा । तद्वक्ष्यति—'अत्राह गोरमन्वते'ति । तस्य गन्धर्वस्य ध्रुवे(ति[1]) पदे स्थाने चन्द्रमण्डलाख्ये । या ह्येता पूर्वपक्षे कलाख्याश्चन्द्रस्यागामि सप्तम्यर्थे वा तृतीया । धीतिषु यागकर्मसु । क्व । गन्धर्वस्य ध्रुवे पदे । यज्ञो गन्धर्व गोर्वाचो धारयितृत्वात् तस्य ध्रुव पद वेदिस्तत्र ॥ १४ ॥

वेङ्कटमाधवीयम् ।

तयोरित् । तयोरेव क्षरणवत् पय सार मेधाविनो वहन्ति कर्मभिरादित्यस्य ध्रुवे स्थानेऽवस्थितम् ॥ १४ ॥

स्योनापृथिविभवानृक्षरानिवेशनी ।

यच्छानःशर्मसप्रथः ॥ १५ ॥

स्योना । पृथिवि । भव । अनृक्षरा । निऽवेशनी । यच्छ । नः । शर्म । सऽप्रथः ॥ १५ ॥

स्कन्दस्वामीयम् ।

स्योनादिस्त्वेव पार्थिवी । स्योना आदि(र्ऋ[2]यस्या सा ऋ)क् पार्थिवी (पृथिवी)देवता । स्योनमिति सुखनाम । सुखा हे पृथिवि! भव अनृक्षरा ऋक्षर कण्टक. तद्वर्जिता । निवेशनी सन्वेशनयोग्या यच्छ देहि च न शर्म गृह सुख वा सप्रथ सर्वत पृथु[3] ॥ १५ ॥

वेङ्कटमाधवीयम् ।

स्योना पृथिवि । सुखा पृथिवि ! भव कण्टकवर्जिता निवेशनी । ऋक्षर कण्टक मुच्यते । यच्छ चास्मभ्य सर्वत पृथु गृहम् ॥ १५ ॥

इति प्रथमस्य द्वितीये षष्ठो वर्गः ॥

---

१ 'म्नो', २ 'त क, ख पाठ ३ 'थु' ख पाठः

अतोदेवाअवन्तुनोयतोविष्णुर्विचक्रमे ।
पृथिव्याःसप्तधामभिः ॥ १६ ॥

अतः । देवाः । अवन्तु । नः । यतः । विष्णुः । विऽचक्रमे ।
पृथिव्याः । सप्त । धामऽभिः ॥ १६ ॥

### स्कन्दस्वामीयम् ।

अतो देवा इति दैवी । अतो देवा इतीयमृक् देवदेवत्या । अतो देवा अवन्तु नः यतो विष्णुर्विचक्रमे विक्रान्तवान् । कुतः । पृथिव्या अवयवभूतेभ्यः सप्त धामभिः । पञ्चम्यर्थे एते प्रथमातृतीये । सप्तभ्यः स्थानेभ्यो द्वीपाख्येभ्यः । सर्वत उपजायमानामापदमस्माकमपनयन्त्वित्यर्थः । केचित्तु पृथिव्या इति पञ्चमी व्याचक्षते । सप्तेति च तृतीयार्थे प्रथमा । यतः पृथिवीतो विचक्रमे सप्तभिर्धामभिः छन्दोभिर्गायुस्कन्धैर्वा, अतः अवन्तु ॥ १६ ॥

### वेङ्कटमाधवीयम् ।

अतो देवाः । अस्मात् स्थानादस्मान् देवा रक्षन्तु । ततो योऽनर्थं उत्पद्यते त-(स्यास्माद्)पनम् । यतो विष्णुर्विचक्रमे यत्र विक्रमः कृत[1] पृथिव्याः सप्तभिश्छन्दोभिः पृथिवीमुपक्रम्य त्रीन् लोकान् विचक्रमे त्रिभ्योऽपि लोकेभ्यो नास्मान् भयमुपगच्छ-त्विति ॥ १६ ॥

इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ।
समूळ्हमस्यपांसुरे ॥ १७ ॥

इदम् । विष्णुः । वि । चक्रमे । त्रेधा । नि । दधे । पदम् ।
समूऽऊळ्हम् । अस्य । पांसुरे ॥ १७ ॥

### स्कन्दस्वामीयम् ।

सूक्तशेषस्तु वैष्णवः । सूक्तशेषाः पञ्चर्चः, ता विष्णुदेवताः । विष्णुश्च भगवान् वासुदेवः । इदमिति सर्वस्य प्रतिनिर्देशः । सर्वमिदं विष्णुर्बलिबन्धनकाले विचक्रमे विक्रान्तवान् । केन प्रकारेण । त्रेधा स्थानभेदेन । त्रिप्रका(रात्रि ? रं नि)हितवान् पदमात्मीयम् । त्रिषु स्थानेषु पदं कृतवा-

1. 'प्रमकृत पृ' म. पाठः.

नित्यर्थः। पृथिव्यामन्तरिक्षे दिवीत्येके। समारोहणे विष्णुपदे गयशिरसीत्यन्ये। तच्च त्रिविधमपि समूह्ळम्। 'वह प्रापणे' इत्येतस्यैतद्रूपम्। सम्यक् इदं प्रापितं सम्यक् प्रतिष्ठापितमित्यर्थ। अस्य स्वमूतम्। कथम्। पांसुरे। पासवो यस्मिन् सन्ति स पासुरः। रो मत्वर्थीय। लुप्तोपमं चेदं द्रष्टव्यम्। पासुर इव। यथा पांसुमति देशे प्रतिष्ठापितमित्यर्थः। अस्य स्वमूतं था भवेत्। तद्वदित्यर्थ। अथवा पासुशब्दः पृथिवीमाह समारोहणं वा, तद्वत्। पदं विष्णोस्तत् समूढ नत्र दृश्यते इत्यर्थः। अथवा (त्रे)धा निदधे पदम्, अग्न्यात्मना पृथिव्यां, वैद्युतात्मनान्तरिक्षे, आदित्यात्मना दिवि। एकमेवेदं ज्योतिस्त्रेधा विभक्तमित्येतद् वक्ष्यति, 'तम् अकृण्वन् त्रेधा भुवे कमि'ति। तत्र यदन्तरिक्षे वैद्युतात्मकमस्य पदं तत् समूह्ळ न दृश्यत इत्यर्थ. ॥ १७ ॥

वेङ्कटमाधवीयम्।

इद विष्णु[२]। त्रैलोक्य विष्णुर्विचक्रमे विक्रममाणश्च त्रेधा निहितवान् पदम्। तत्र यास्कः — 'पृथिव्यामन्तरिक्षे दिवीति शाकपूणि। समारोहणे विष्णुपदे गयाशिरसीत्यौर्णवाभ[३]'। समूह्ळमस्य[४] पांसुले पदे त्रैलोक्यम्॥ १७॥

त्रीणिपदाविचक्रमेविष्णुर्गोपाअदाभ्यः।

अतोधर्माणिधारयन्॥ १८॥

त्रीणि। पदा। वि। चक्रमे। विष्णुः। गोपाः। अदाभ्यः।

अतः। धर्माणि। धारयन्॥ १८॥

स्कन्दस्वामीयम्।

त्रीणि पदानि विचक्रमे विष्णुर्गोपा गोपायिता कृत्स्नस्य जगतो रक्षिता अदाभ्य. अहिंस्य। कुतो विचक्रमे। अतः पार्थिवाल्लोकात्। धर्माणि धारयन्। धर्मशब्द. कर्मवचन धारयितव्यवचनो वा। सर्वाणि कर्माणि धारयितव्यानि वा आत्मनि धारयन्। सर्वस्य हि भगवान् विष्णुराश्रय ॥ १८ ॥

१ 'वे हीद' क, 'व हीति ज्यो' ख पाठ २ 'ष्णुर्विचक्रमे। इदं त्रै', ३. 'भः इति। स' ग पाठ ४ 'समूह्ळम' घ पाठ. ५ 'नो' क ख पाठः

वेङ्कटमाधवीयम् ।

, त्रीणि पदा । त्रीणि पदानि विचक्रमे विष्णुर्गोपा अविताहिंस्यः पृथिवीमारभ्य मनुष्याणां कर्माणि धारयन् ॥ १८ ॥

विष्णोःकर्माणिपश्यतयतोव्रतानिपस्पशे ।
इन्द्रस्ययुज्यःसखा ॥ १९ ॥

विष्णोः । कर्माणि । पश्यत । यतः । व्रतानि । पस्पशे ।
इन्द्रस्य । युज्यः । सखा ॥ १९ ॥

स्कन्दस्वामीयम् ।

विष्णोरिति कर्माणि पश्यत यूयमृषयः ऋत्विजो वा । यत इति 'आद्यादिभ्य उपसंख्यानम्' (वा० ५-४-४४) इति तृतीया(यां) तसिः । यैः व्रतानि प्रवर्त्यन्ते तानीति हविर्लक्षणान्यन्नानि कर्माणि वा यागाख्यानि च । तानि पस्पशे । 'स्पश बन्धने' । आत्मनि प्रतिबद्धवान् आत्मदेवत्यानि कृतवानित्यर्थः । अथवा व्रतानि कर्माणि बलिप्रभृतीनां दानवानामसुराणां च । तानि पस्पशे प्रतिबद्धवानित्यर्थः । कीदृशः । इन्द्रस्य युज्यः योग्यः सखा ॥ १९ ॥

वेङ्कटमाधवीयम् ।

विष्णोः कर्माणि । विष्णोः कर्माणि पश्यत यैर्मनुष्याणां कर्माणि बध्नाति इन्द्रस्य नियोज्यः सखा ॥ १९ ॥

तद्विष्णोःपरमंपदंसदापश्यन्तिसूरयः ।
दिवीवचक्षुराततम् ॥ २० ॥

तत् । विष्णोः । परमम् । पदम् । सदा । पश्यन्ति । सूरयः ।
दिविऽइव । चक्षुः । आऽततम् ॥ २० ॥

स्कन्दस्वामीयम् ।

तद् विष्णोः स्वभूतं परमं पदं सदा पश्यन्ति सूरयः स्तोतारः । कथम् । (दिवीवं चक्षुराततम् ।) चक्षुः प्रकाशनमादित्यमण्डलम् । यथा दिवि

1. 'रद्भुतानि क' ग. पाठः.   2. 'प्रतिप्र' क. ख. पाठः.

विततमादित्यमण्डलं तद्वत् । अथ तु विष्णुरादित्य एव, (इव)शब्दः पदपूरणः । अस्ति ह्युपमार्थ्यसंप्रत्यये प्रयोगः । इहेव निधेहीति यथा । विष्णोः परमं पदं दिवि विततमादित्यमण्डलाख्यं पश्यन्तीत्यर्थः । अथवा चक्षुःशब्दस्येन्द्रिये प्रसिद्धत्वादेव योजयितव्यः विष्णोः परमं पदं सदा पश्यन्ति सूरयः यथा दिवि, एवं विष्णावपि सर्वमनुष्याणां चक्षुराततमिति ॥ २० ॥

वेङ्कटमाधवीयम् ।

तद्विष्णोः । तद् विष्णोरुत्तमं स्थानं सदा पश्यन्ति प्राज्ञाः अन्तरिक्षे विततमिव तेजः । यद्वा अन्तरिक्षे विततं यथा चक्षुः पश्यन्ति ॥ २० ॥

तद्विप्रासोविपन्यवोजागृवांसःसमिन्धते ।
विष्णोर्यत्परमंपदम् ॥ २१ ॥

तत् । विप्रासः । विपन्यवः । जागृऽवांसः । सम् । इन्धते ।
विष्णोः । यत् । परमम् । पदम् ॥ २१ ॥

स्कन्दस्वामीयम् ।

विप्र इति मेधाविनाम । तन्मेधाविनः । विपन्यवः । नेदं मेधाविनाम विप्रास इत्यनेन पौनरुक्त्यप्रसङ्गात् । किन्तर्हि, पनतेः स्तुत्यर्थस्य । वि(पन) स्तुतिः तत्कामा विपन्यवः । तद्वदर्थे वा युशब्दः । स्तुतिमन्तः । जागृवांसः । जागरणेनात्राप्रमादो लक्ष्यते । अप्रमाद्यन्तः । समिन्धते स्तुतिभिः सन्दीपयन्ति स्तुवन्तीत्यर्थः । किं तद् । विष्णोर्यत् परमं पदम् ॥ २१ ॥

वेङ्कटमाधवीयम् ॥

तद् विप्रासः । तदुत्तमं पदं मेधाविनो विविधं स्तुवन्तः स्वप्नवर्जिताः कर्मभिः सन्दीपयन्ति यज्ञार्थम् ॥ २१ ॥

इति प्रथमस्य द्वितीये सप्तमो वर्गः ॥

तीव्राःसोमासआगह्याशीर्वन्तःसुताइमे ।
वायोतान्प्रस्थितान्पिब ॥ १ ॥

---

१ °था क पाठ २ °था अपि ख पाठ

तीव्राः। सोमा॑सः। आ। ग॒हि॒। आ॒शीः॑ऽवन्तः। सु॒ताः। इ॒मे।
वायो॒ इति॑। तान्। प्रऽस्थितान्। पि॒ब॥ १॥

स्कन्दस्वामीयम्।

तीव्राः सोमासो वायव्या। तीव्राः सोमास इतीयमृग् वायुदेवत्या। तीव्राः। तीव्रशब्दस्तिक्तवचनः। तिक्तरसाः, कटुरसा वा। सोमासः। आशीर्वन्तः सोममिश्रं दध्याशीः तद्वन्तः। सुता इमे। एतज्ज्ञात्वा आगहि। आगत्य च हे वायो! तान् प्रस्थितसंज्ञकान् सोमान् पिब॥ १॥

वेङ्कटमाधवीयम्।

तीव्राः सोमासः। मदोत्पादनसमर्थाः सोमा आगच्छताशिरेण युक्ताः। इमे सुताः सोमाः वायो!। तान् प्रस्थितान् पिब॥ १॥

उ॒भा दे॒वा दि॑वि॒स्पृशे॑न्द्रवा॒यू ह॑वामहे।
अ॒स्य सोम॑स्य पी॒तये॑॥ २॥

उ॒भा। दे॒वा। दि॒वि॒ऽस्पृशा॑। इ॒न्द्र॒वा॒यू इति॑। ह॒वा॒म॒हे॒। अ॒स्य।
सोम॑स्य। पी॒तये॑॥ २॥

स्कन्दस्वामीयम्।

तृचोऽन्यस्त्वैन्द्रवायवः। तीव्राः सोमा(स) इत्यतोऽन्यः समनन्तर एव तृच इन्द्रवायुदेवतः। उभौ देवौ दिविस्पृशा दिविस्पृशौ द्युलोकं गन्तारावित्यर्थः। इन्द्रवायू हवामहे। किमर्थम्। अस्य सोमस्य पीतये॥ २॥

वेङ्कटमाधवीयम्।

उभा देवा। उभौ देवौ द्युस्थानौ[1] इमौ हवामहे सोमपानायेति॥ २॥

इ॒न्द्र॒वा॒यू म॑नो॒जुवा॒ विप्रा॑ हवन्त ऊ॒तये॑।
स॒ह॒स्रा॒क्षा धि॒यस्पती॑॥ ३॥

1. 'स्थानिनौ' ग. पाठः.

इन्द्रवायू इति । मनःऽजुवा । विप्राः । हवन्ते । ऊतये । सहस्रऽअक्षा । धियः । पती इति ॥ ३ ॥

### स्कन्दस्वामीयम् ।

इन्द्रवायू मनोजुवा । जुवतिर्गतिकर्मा । मनोवच्छीघ्रगामिनौ । विप्रा मेधाविनो यष्टारः स्तोतारश्च हवन्ते ऊतये सोमेन तर्पणाय पालनाय वा । सहस्राक्षा । सहस्रमक्ष्णां ययोस्तौ सहस्राक्षौ । केवलस्यापीन्द्रस्य सहस्राक्षत्वे साहचर्यादुभयोरिन्द्रवाय्वोः सहस्राक्ष(त्व)व्यपदेशः । धियस्पती कर्मणः प्रज्ञाया वा पालयितारौ स्वामिनौ ॥ ३ ॥

### वेङ्कटमाधवीयम् ।

इन्द्रवायू । मनोवेगौ मेधाविनो हवन्ते रक्षणायानेकदर्शनौ[1] कर्मपती॥ ३ ॥

मित्रंवयंहवामहेवरुणंसोमपीतये ।
जज्ञानापूतदक्षसा ॥ ४ ॥

मित्रम् । वयम् । हवामहे । वरुणम् । सोमऽपीतये । जज्ञाना । पूतऽदक्षसा ॥ ४ ॥

### स्कन्दस्वामीयम् ।

तृचो मित्रावरुणाभ्याम् । तृचोऽयं मित्रावरुणदेवतः । मित्रं वयं हवामहे वरुणं च । किमर्थम् । सोमपीतये । कीदृशौ । जज्ञाना जायमानावेव पूतदक्षसा शुद्धबलौ ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

मित्रं वयम् । मित्रावरुणौ प्राज्ञौ शुद्धबलौ सोमपानाय हवामह इति ॥ ४ ॥

ऋतेनयावृतावृधावृतस्यज्योतिषस्पती ।
तामित्रावरुणाहुवे ॥ ५ ॥

ऋतेन । यौ । ऋतऽवृधौ । ऋतस्य । ज्योतिषः । पती इति । ता । मित्रावरुणा । हुवे ॥ ५ ॥

---

१. 'पि स चे' २. 'यौंहभ' ख. पाठः.

स्कन्दस्वामीयम्।

ऋतेन उदकेन यज्ञेन वा यौ ऋतावृधौ यज्ञस्योदकस्य वा वर्धयितारौ ऋतस्य यज्ञस्योदकस्य वा ज्योतिषस्पती। अथवा ऋतस्य ज्योतिष इति समानाधिकरणे। सर्वत्र गतस्य रश्म्याख्यस्य ज्योतिषः पती। तौ मित्रावरुणौ हुवे॥५॥

वेङ्कटमाधवीयम्।

ऋतेन। सत्येन यौ सत्यस्य वर्धयितारौ सत्यस्य ज्योतिषः पती तौ मित्रावरुणा हुवे॥५॥

इति प्रथमस्य द्वितीयेऽष्टमो वर्गः।

वरुणःप्राविताभुवन्मित्रोविश्वाभिरूतिभिः।
करतांनःसुराधसः॥६॥

वरुणः। प्रऽअविता। भुवत्। मित्रः। विश्वाभिः। ऊतिऽभिः। करताम्। नः। सुऽराधसः॥६॥

स्कन्दस्वामीयम्।

वरुणः प्राविता प्रकर्षेण रक्षितास्माकं भुवत् भवतु। मित्रश्च विश्वाभिरूतिभिः सर्वैः पालनैः करतां कुरुतां च नः अस्मान् सुराधसः सुधनान् ॥६॥

वेङ्कटमाधवीयम्।

वरुणः प्राविता। वरुणः प्रकर्षेण रक्षको भवतु। मित्रश्च विश्वैः पालनैः। तावस्मान् कुरुतां च स्वन्नान्॥६॥

मरुत्वन्तंहवामहइन्द्रमासोमपीतये।
सजूर्गणेनतृंपतु॥७॥

मरुत्वन्तम्। हवामहे। इन्द्रम्। आ। सोमऽपीतये। सऽजूः। गणेन। तृंपतु॥७॥

स्कन्दस्वामीयम्।

तथेन्द्राय मरुत्वते। यथैव मित्रावरुणाभ्यां तृचः,[1] तथैवेन्द्रायापि मरुत्वते तृच एव। मरुत्वन्तं मरुद्भिः सहितं हवामहे इन्द्रम्। आकारस्तु

१. 'च' ख. ग. पाठः.

पदपूरणो वा, हवामह इत्याख्यातेन वा सम्बन्धयितव्यः, अर्वाञ्चि वा अर्वाग्घवामह इति । किमर्थम् । सोमपीतये । एतज्ज्ञात्वा सजूः । 'जुषी प्रीतिसेवनयोः' । सम्प्रीयमाणः । गणेन मरुद्गणेन सह तृम्पतु तृप्यतु ॥ ७ ॥

वेङ्कटमाधवीयम् ।

मरुत्वन्तम् । मरुद्भिः सहितमिन्द्रमाह्वयामहे सोमपानाय । मरुद्गणेन सहितः सोमेन तृप्यतु ॥ ७ ॥

इन्द्र॑ज्येष्ठा॒मरु॑द्गणा॒देवा॑सः॒पूष॑रातयः ।
विश्वे॒मम॑श्रुता॒हव॑म् ॥ ८ ॥

इन्द्र॑ऽज्येष्ठाः । मरु॑त्ऽगणाः । देवा॑सः । पूष॑ऽरातयः । विश्वे॑ । मम॑ । श्रुत॒ । हव॑म् ॥ ८ ॥

स्कन्दस्वामीयम् ।

ज्येष्ठशब्दः प्रधानवचनः । इन्द्रः प्रधानभूतो येषां त इन्द्रज्येष्ठाः । हे इन्द्रज्येष्ठा[1] मरुद्गणाः । सप्तसप्तका मरुतां गणाः, तदपेक्षमेतद्बहुवचनम् । देवासः पूषरातयः विश्वे सर्वे मम श्रुत शृणुत हवमाह्वानम् ॥ ८ ॥

वेङ्कटमाधवीयम् ।

इन्द्रज्येष्ठाः । इन्द्रनेतृकाः पूषदातिका मरुतो देवास्ते सर्वे मम शृणुताह्वानम् ॥ ८ ॥

ह॒त वृ॒त्रं सु॑दानव॒ इन्द्रे॑ण॒ सह॑सा यु॒जा ।
मा नो॑ दुः॒शंस॑ ईशत ॥ ९ ॥

हत॑ । वृ॒त्रम् । सु॒ऽदा॒न॒वः॒ । इन्द्रे॑ण । सह॑सा । यु॒जा । मा । नः॒ । दुः॒ऽशंसः॑ । ई॒श॒त॒ ॥ ९ ॥

स्कन्दस्वामीयम् ।

हत वृत्रमसुरमस्मच्छत्रुं वा हे सुदानवः ! शोभनदाना मरुतः ! । इन्द्रेण सहयोगलक्षणैषा तृतीया । इन्द्रेण सह । कीदृशेन । सहसा । बलनाम-

१. 'र मेषम' ग. पाठः.

तत् सामर्थ्याचान्तर्णीतमत्वर्थम् । बलवता । युजा सहायेन । मा च नः अस्माकं युष्मत्प्रसादेन दुःशंसः दुराशंसः क्रूराभिप्रायः ईशत ईशो भवेत् ॥ ९ ॥

वेङ्कटमाधवीयम् ।

हत वृत्रम् । हत वृत्रासुरं सुदानवः[1] इन्द्रेण सहायेन बलवता सह । मास्माकं दुःशंस ईशत ईशिष्ट ॥ ९ ॥

विश्वान्देवान्हवामहेमरुतःसोमपीतये ।

उग्राहिपृश्निमातरः ॥ १० ॥

विश्वा॑न् । दे॒वान् । ह॒वा॒म॒हे॒ । म॒रुतः॑ । सोम॑ऽपीतये । उ॒ग्राः । हि । पृश्नि॑ऽमातरः ॥ १० ॥

स्कन्दस्वामीयम् ।

तृचो विश्वेषां देवानाम् । अत्र चाद्यः पादो विश्वलिङ्गः शिष्टं मारुतम् । वक्ष्यति हि—

"बहुशस्तु वैश्वदेवेषु सन्त्यृचः पच्छोऽर्धर्चा द्विपदाश्चैकपदाश्च ।
द्विप्रधाना अपि चैकप्रधाना बहुप्रधाना अपि वैश्वदेवे ॥"

इति । विश्वान् देवान् हवामहे एतावदेकवाक्यम् । परं तु वाक्यान्तरम् । मरुतां विश्वैर्देवैः सह विशेषणविशेष्यभावस्य समुच्चयस्य चासम्भवात् साकाङ्क्षत्वाच्च परस्मिन् वाक्ये हवामह इति पूर्वाद् वाक्यात् क्रियापदमनुषक्तव्यम् । मरुतो हवामहे । किमर्थम् । सोमपीतये । उग्रा हि । हिशब्दो यस्मादर्थे । यस्मादुग्रा अप्रसह्याः शत्रुभिः । पृश्निमातरः । पृश्निरिति द्युनाम । द्यौर्माता येषां मरुतां ते पृश्निमातरः । दिवः पुत्रा इत्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

विश्वान् देवान् । वैश्वदेवस्तृच उक्तो मरुत्सु च विश्वशब्दो दृश्यते । विश्वान् देवान् सोमपानाय हवामहे । उद्गूर्णा[2] हि पृश्निमातर । 'पृश्निर्वै पयः पयसो मरुतो जाता'[3] इति ब्राह्मणम् ॥ १० ॥

इति प्रथमस्य द्वितीये नवमो वर्गः ।

जयतामिवतन्यतुर्मरुतामेतिधृष्णुया ।

यच्छुभंयाथनानरः ॥ ११ ॥

१. 'त ॥' क. ख. पाठः. २. 'पि ईं' ख. घ. पाठः. ३. 'अ तुवा' क. ख. पाठः.

जयताम्ऽइव । तन्यतुः । मरुताम् । एति । धृष्णुऽया । यत् । शुभम् । याथन । नरः ॥ ११ ॥

स्कन्दस्वामीयम् ।

राज्ञां सङ्ग्रामं जयतामिव तन्यतुः गर्जितशब्दो युष्माकं मरुतां स्वभूतः एति गच्छति श्रोत्रदेशं, श्रूयत इत्यर्थः । कीदृशः । धृष्णुया प्रथमैकवचनस्यायं याजादेशः । धृष्णु अभिभविता महान् गम्भीरश्चेत्यर्थ. । कदा । उच्यते । यत् यदा । शुभम् । उदकनामैतत् । मेघस्थमुदकं प्रति याथन गच्छथ । अथवा शुभशब्दः शोभनपर्यायः क्रियाविशेषणम् । यदा शोभनं गच्छथ हे नरः । मनुष्याकृतयः । ॥ ११ ॥

वेङ्कटमाधवीयम् ।

जयतामिव । सैनिकानामिव शब्दो मरुतां[1] गच्छति धृष्णुः यदा यूयं कल्याण गच्छत नेतारः ॥ ११ ॥

हस्काराद्विद्युतस्पर्यतोजाताअवन्तुनः ।
मरुतोमृळयन्तुनः ॥ १२ ॥

हस्कारात् । विऽद्युतः । परि । अतः । जाताः । अवन्तु । नः । मरुतः । मृळयन्तु । नः ॥ १२ ॥

स्कन्दस्वामीयम् ।

आर्तस्य[2] पुंसः हस्शब्दोच्चारणं हस्कार । तस्माद्धस्कारात् । विद्युतश्पर्यत. । परिशब्द उपरिभावे । विद्युत उपर्यस्या जाताः । जन्मात्र व्यवस्थानमभिप्रेतम् । व्यवस्थिताः विद्युतमधिष्ठायेत्यर्थ । अवन्तु वृष्टिप्रदानेन पालयन्तु नः अस्मान्, यथा विपादनिमि(त्तमातीत[3] सार्ति)प्रतिपत्त्यर्थं हस्शब्दं नोच्चारयामः तथा कुर्वन्त्वित्यर्थः । के । मरुत. । मृळयन्तु च नः अस्मान् ॥ १२ ॥

वेङ्कटमाधवीयम् ।

हस्कारात् । अस्मादन्तरिक्षाज्जाता मरुतो विद्योतनानन्तरं वृष्टधभावजनिताद्धस्कारा[4]दस्मान् रक्षन्तु । मरुतः सुखयन्त्वस्मानिति ॥ १२ ॥

---

१. 'तां शब्दो म', २. 'यदा दुर्भिक्षात् तस्य', ३. सः आर्तप्रतिपत्त्यर्थं हस्शब्दोच्चारणं स ह' म. पाठः. ४. 'तान्धकारा' ख. पाठः

आपूषञ्चित्रबर्हिषमाघृणे धरुणं दिवः ।
आजा नष्टं यथा पशुम् ॥ १३ ॥

आ । पूषन् । चित्रऽबर्हिषम् । आघृणे । धरुणम् । दिवः ।
आ । अज । नष्टम् । यथा । पशुम् ॥ १३ ॥

स्कन्दस्वामीयम् ।

पूष्ण आघृणये तृचः । पूष्ण आघृणिगुणका(यं ? य) तृचः । आ इत्युपसर्गः अजेत्याख्यातेन सम्बन्धयितव्यः । हे पूषन्! चित्रबर्हिषं विचित्रं पूज्यं वा बर्हिर्यस्य स चित्रबर्हिः सोमः तं चित्रबर्हिषम् । आघृणे! । 'घृ क्षरणदीप्त्योः' । क्षरिता घृणिः दध्नः पू(र्णो ? र्णा) दृतिः सा कक्षे रथे वा यस्य स आघृणिः पूषा । वक्ष्यति हि — 'दृतेरिव ते वृकमस्तु सख्यमि'ति । तस्य सम्बोधनम् । अथवा दीप्तिर्घृणिः सा आगता यस्य स आघृणिः उपजातदीप्तिः । हे आघृणे! धरुणं धारयितारं दिवः । तात्स्थ्यात् ताच्छब्द्यं 'मञ्चाः क्रोशन्ती'ति यथा । द्युनिवासिनां देवानाम् । सोमलक्षणेनान्नेन देवा धार्यन्ते । अथवा धरुणमित्युदकनाम । चित्रबर्हिषं च सोममुदकं दिवः आ आ अज । अजिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । उपसर्गाभ्यासाच्च तत्सम्बन्धिनः क्रियापदस्याभ्यासः । आज आज अस्मदर्थे पुनः पुनरागमयेत्यर्थः । कैथम् । नष्टं यथा पशुम् । यथा नष्टं पशुमजं गां वा त्वमेवागमयसि पशूनां रक्षितृत्वात्, लौकिको वा पशुपालस्तद्वत् ॥ १३ ॥

वेङ्कटमाधवीयम् ।

आ पूषन् । आनय पूषन्! पणिभिरपहृतं सोममागमदीप्ते! धारकं द्युलोकस्य यथा नष्टं पशुं त्वमानयसि ॥ १३ ॥

पूषा राजानमाघृणिरपगूह्ळं गुहा हितम् ।
अविन्दच्चित्रबर्हिषम् ॥ १४ ॥

पूषा । राजानम् । आघृणिः । अपऽगूह्ळम् । गुहा । हितम् ।
अविन्दत् । चित्रऽबर्हिषम् ॥ १४ ॥

---

१. 'त्रपू', २. 'आ अजि', ३. 'कम् न', ४ 'र' ख. पाठः. ५. 'माहृत' ग. पाठः.

स्कन्दस्वामीयम् ।

अत्रेतिहासमाचक्षते—'असुराः सोमं राजानं दीयमानममेर्हस्तादपहृत्य गुहायां न्यदधुः १ तं पर्येषमाणा अन्ये देवा नाविन्दन् । पूषा त्वविन्दत् । स तं गृहीत्वा दिवमानयदि'ति । तदेतदिहोच्यते । पूषा राजानमाघृणिः अपगूढं निगूढमाच्छादितं गुहा गुहायां हितं निहितमसुरैरविन्दत् लब्धवान् चित्रबर्हिषम् ॥ १४ ॥

वेङ्कटमाधवीयम् ।

पूषा राजानम् । पूषा सोममाघृणिरसुरैरपगूढं गुहायां निहितमविन्दद् यस्मै चित्रबर्हिः स्तीर्यते ॥ १४ ॥

उतोसमह्यमिन्दुंभिःषड्युक्ताँअनुसेषिधत् ।

गोभिर्यवंनचर्कृषत् ॥ १५ ॥

उतो इति । सः । मह्यम् । इन्दुऽभिः । षट् । युक्तान् । अनुऽसेसिधत् । गोभिः । यवम् । न । चर्कृषत् ॥ १५ ॥

स्कन्दस्वामीयम् ।

उतो इत्युतशब्दस्योत्रा सहैकादेशः । उत उ । उ इति उञ् चार्थे नाम्ना वा सह कृतैकादेशः । 'एषो उषा', 'सो चिन्नु', 'चत्तो इतः' इति यथा । आख्यातेन वा सह । 'जनिष्टो अप.' इति यथा । उपसर्गेण वा सह । 'प्रो आरत', 'उपो रथेषु', 'अपो सुम्यक्ष' इति यथा । निपातेन वा सह । 'अभो वयं', 'नो वयं', 'उतो न्वस्य', 'मो(प्वो)न्यत्रे'ति यथा । स सर्वः पदपूरणोऽपृथगर्थत्वाच्च कृतैकादेशः । उञ् पदकारेण पूर्वेण पदेन सहैकीकृत्यैव पठितः । इतिकरणोपादानात्तु प्रगृह्यतां दर्शयता दर्शितो बोद्धव्य इति । स पूषा मह्यं मदर्थम् । इन्दुभिः । द्वितीयार्थे तृतीयैषा । इन्दून् सोमान् षट् युक्तान् संवत्सरस्य गमयितुमित्यर्थः । अथवा युक्तान् यान् यान् यो यादृशः

---

१. 'माद्वयं जानवन् म' ग पाठ २. 'ट । एव इन्दस्तवान ज', ३. 'कपदीकृत एव, न पदान्त(रित्व ? ?)कृत्य भेदेन प' क ग. पाठः. ४. 'द् ऋतून् यु' ग. पाठः. ५. 'न् व' ग. पाठः.

साधयितव्यः तं तादृशमेव । अ(नु)सेषिधन् । अनन्तमेतत्, नाख्यातम्, अँनुदात्तत्वात् । आनुपूर्व्येण साधयन् । गोभिर्यवं न । गोशब्दोऽत्र बलीवर्देषु वर्तते । यवशब्दो धान्यमात्रोपलक्षणार्थः । यथा कश्चित् कर्षको बलीवर्दैर्यवादिधान्यं कुर्यात् तद्वत् । चर्कृषत् । करोतेर्यङ्लुगन्तस्येदं रूपं, न कृषतेः । पुनः पुनः करोतु सोमयागानित्यर्थः ॥ १५ ॥

वेङ्कटमाधवीयम् ।

अतो स महान् । अपि च स पूषा मह्यं षणिम्य आहुतैरिन्दुभिः षड्तून् यथापूर्वं युक्तानानुक्रमेण रुन्धन् यथा यवान् भूम्यामुप्तान् प्ररोहार्थं षड्गवादिना हलेन कृषन्ति तद्वदनुक्रमेण पुनः पुनः ऋतून् प्रवर्तयत्वमरणायेति ॥ १५ ॥

इति प्रथमस्य द्वितीये दशमो वर्गः ॥

---

अम्बयो यन्त्यध्वभिर्जामयो अध्वरीयताम् ।

पृञ्चतीर्मधुना पयः ॥ १६ ॥

अम्बयः । यन्ति । अध्वऽभिः । जामयः । अध्वरिऽयताम् ।

पृञ्चतीः । मधुना । पयः ॥ १६ ॥

स्कन्दस्वामीयम् ।

अर्धोष्टमा अपां ज्ञेयाः । अर्धोष्टमा ऋचः अब्देवत्या ज्ञेयाः । अम्बिशब्दोऽम्बापर्यायः । अम्बा मातृभूता आपः यन्ति यज्ञं प्रतिगच्छन्ति निर्यैतैरध्वभिर्मार्गैः जामयः भगिनीस्थानीयाश्च अध्वरीयतां यज्ञकामानां पृञ्चतीः सम्पर्चयन्त्यः स्वावयवभूतेन मधुना । मध्वित्युदकनाम । वसतीवर्यैकधनास्येनोदकेन । पयः सोमलक्षणमुदकम् ॥ १६ ॥

वेङ्कटमाधवीयम् ।

अम्बयो यन्ति । अत्र शाट्यायनकम् । तस्यैव श्लोकः—

"न ता अन्यः प्रतरति नैना जिज्ञातुमर्हति ।

वहन्त्यस्मै सर्वतो मधु क्षीरं घृतं दधि पयः समुद्रान्तस्थापः ॥"

इति । इममाह वैता अम्बयोऽन्याभिराहित्य (?) । अम्बयो मातॄर्गच्छन्ति यज्ञमिच्छतां जामिस्थानीया मधुरेण रसेन अयत्नमुदकं सम्पृञ्चन्तः ॥ १६ ॥

---

१. 'अनतु' ग. पाठः. २. 'त्त्वा । ढल ज', ३. 'मैदं', ४. 'दैः' ङ. च. पाठः, ५. 'नें' ख. घ. पाठः. ६. 'न्येवादिना अ' ग. घ. पाठः, ७. 'न्' घ. पाठः.

अमूर्याउपसूर्येयाभिर्वासूर्यःसह ।

तानोहिन्वन्त्वध्वरम् ॥ १७ ॥

अमूः । याः । उप । सूर्ये । याभिः । वा । सूर्यः । सह । ताः । नः । हिन्वन्तु । अध्वरम् ॥ १७ ॥

स्कन्दस्वामीयम् ।

अमूरिमा या आप । उपसूर्ये सूर्यसमीपे । याभिर्वा । वाशब्द समुच्चये । याभिश्च सूर्य सह याश्च सूर्येणैकस्थाना, आदित्यमण्डलस्था इत्यर्थ । ता नो हिन्वन्तु, 'हि गतौ वृद्धौ च', गच्छन्तु वर्धयन्तु वा अध्वरम् ॥ १७ ॥

वेङ्कटमाधवीयम् ।

अमूर्या । अमूर्या उपभवन्ति सूर्ये याभिर्वा सूर्य सह भवति ता अस्माकं यज्ञं गच्छन्तु ॥ १७ ॥

अपोदेवीरुपह्वयेयत्रगावःपिबन्तिनः ।

सिन्धुभ्यःकर्त्वंहविः ॥ १८ ॥

अपः । देवीः । उप । ह्वये । यत्र । गावः । पिबन्ति । नः । सिन्धुऽभ्यः । कर्त्वम् । हविः ॥ १८ ॥

स्कन्दस्वामीयम्

अपो देवीरहमुपह्वये । यत्र, द्वितीयार्थे (पञ्च[1] सप्त)म्येषा, या । गाव पिबन्ति न । किं कारणम् । यस्मात् सिन्धुभ्य । 'स्यन्दू प्रस्रवणे' इत्यस्यैतद्रूपम् । तादर्थ्ये चतुर्थी । स्यन्दित्रीणामपामर्थाय । कर्त्वम् । कृत्यार्थेऽय त्वप्रत्यय । सर्वेण कर्तव्य हवि । अथवा सिन्धुभ्य इति पञ्चमी । तच्छ्रुतेश्चादायेति वाक्यशेष । यस्मात् स्यन्दित्रीभ्य वसतीवर्यैकधनालक्षणमेकदेशमादाय कर्तव्य सोमलक्षण हवि ॥ १८ ॥

१ 'कुत्र', २ 'नाभ्य एव' न पाठ

वेङ्कटमाधवीयम् ।

अपो देवीः । अपो देवीरुपह्वये यासु गावः पिबन्त्यस्माकं ताभ्यो हि कर्तव्यमस्माभिर्हविः ॥ १८ ॥

अप्स्व१न्तरमृतमप्सुभेषजमपामुतप्रशस्तये ।
देवाभवतवाजिनः ॥ १९ ॥

अप्ऽसु । अन्तः । अमृतम् । अप्ऽसु । भेषजम् । अपाम् । उत । प्रऽशस्तये । देवाः । भवत । वाजिनः ॥ १९ ॥

स्कन्दस्वामीयम् ।

अपां मध्ये अमृतम् । अप्स्वेव भेषजम् । भेषजमिति सुखनाम । व्याधेर्व्यपनोदकं भेषजमुच्यते । एतज्ज्ञात्वा अपामुत प्रशस्तये । उतशब्दः पदपूरणः एवार्थे वा । अपामेव प्रशंसनाय स्तुतये । हे देवाः ! हविषो दातार ऋत्विजः ! । भवत यूयं वाजिनः अन्नेन तद्वन्तः । अपः स्तोतुं हविरुपकल्पयतेत्यर्थः ॥ १९ ॥

वेङ्कटमाधवीयम् ।

अप्स्वन्तः । अपामन्तरमृतम् । 'अमृतं वा आपस्तस्मादद्भिरवतान्तमभिषिञ्चन्ति' इति ब्राह्मणम् । अप्स्वेव भेषजं विविधौषधीषु प्रादुर्भूतम् । अपां स्तोत्रार्थेन्द्रियाणि ! बलयुक्तानि भवत ॥ १९ ॥

अप्सुमेसोमोअब्रवीदन्तर्विश्वानिभेषजा ।
अग्निंचविश्वशम्भुवमापश्चविश्वभेषजीः ॥ २० ॥

अप्ऽसु । मे । सोमः । अब्रवीत् । अन्तः । विश्वानि । भेषजा । अग्निम् । च । विश्वऽशम्भुवम् । आपः । च । विश्वऽभेषजीः ॥ २० ॥

स्कन्दस्वामीयम् ।

अपां मध्ये सर्वाणि भेषजानीति मह्यं सोमः कथितवान् । नच भेषजान्येव केवलानि, किन्तर्हि । अग्निं च वैद्युताख्यम् । कीदृशम् । विश्वशम्भुवम् । भवतिरत्र सामर्थ्यादन्तर्णीतण्यर्थः । सर्वप्राणिनां सुखस्य भावयितारम् उत्पादयितारम् । आपश्च विश्वभेषजीः । स्वयमप्यापः सर्वस्य भेषजभूताः ॥ २० ॥

---

१. 'अप्सु मे सोमः अब्रवीत् क', २. 'न् । अन्तर्विश्वानि भेषजा । भ' क. ख. पाठः,

वेङ्कटमाधवीयम् ।

अप्सु मे। ओषधीश सोमोऽब्रवीदन्तर्विश्वानि भेषजानि सन्तीति मामब्रवीत् । अग्निं च सर्वस्य सुखस्य भावयितारमप्सु स्थितम् । स्वरूपेण चोदकानि विश्वभेषजानि उवाच ॥ २० ॥

इति प्रथमस्य द्वितीये एकादशो वर्गः ॥

---

आपः॑पृणी॒त भे॑ष॒जंवरू॑थंत॒न्वे॒३॑मम॑ ।

ज्योक्च॒सूर्यं॑दृ॒शे ॥ २१ ॥

आपः॑ । पृ॒णी॒त । भे॒ष॒जम् । वरू॑थम् । त॒न्वे॑ । मम॑ । ज्योक् ।

च । सूर्य॑म् । दृ॒शे ॥ २१ ॥

स्कन्दस्वामीयम् ।

हे आपः ! पृणीत । 'पॄ पालनपूरणयोः' । पालयतात्मान्तर्गतं भेषजम् । कीदृशम् । वरूथं वरणीयम् । किमर्थम् । तन्वे । तादर्थ्ये एषा चतुर्थी । शरीरस्यार्थाय । कस्य । मम । मच्छरीरं भेषज(यि)तुमित्यर्थः । अथवा सम्प्रदानचतुर्थीश्रुतेर्दानार्थ एव पृणाति "पृणीयादिन्नाधमानाये"ति यथा । दत्त भेषजं शरीराय मे । न च केवलम्, किन्तर्हि, ज्योक् च सूर्यं दृशे । ज्योगिति निपातश्चिरवचनः । चिरं सूर्यं द्रष्टुं पृणीत । किम् । सामर्थ्याच्चक्षुः । तेन हि सूर्यश्चिरं दृश्यते । अथवा सूर्यमिति पृणातेरेव कर्म न दृशः । सूर्यं च पृणीत चिरं द्रष्टुमिति । एतदुक्तं भवति—शरीरभेषजं च मे दत्त । अविकलेन्द्रियतां च चिरं सूर्यस्य सन्दर्शनायेति ॥ २१ ॥

वेङ्कटमाधवीयम् ।

आपः पृणीत । आपः ! प्रयच्छत भेषजमुपद्रवाणां शरीरस्य च रक्षाभूतम् । चिरं च सूर्यं मा द्रष्टुं कुरुत ॥ २१ ॥

इ॒दमा॑पः॒प्रव॑हत॒यत्किंच॑दुरि॒तंमयि॑ ।

यद्वा॒हम॑भिदु॒द्रोह॒यद्वा॑शे॒पउ॒तानृ॑तम् ॥ २२ ॥

इ॒दम् । आ॒पः॒ । प्र । व॒ह॒त॒ । यत् । किम् । च॒ । दुः॒ऽइ॒तम् ।

मयि॑ । यत् । वा॒ । अ॒हम् । अ॒भि॒ऽदु॒द्रोह॑ । यत् । वा॒ । शे॒पे । उ॒त ।

अनृ॑तम् ॥ २२ ॥

स्कन्दस्वामीयम् ।

हे आपः! प्रवहत प्रकर्षेणान्यत्र प्रापयत अपनयतेत्यर्थः । किम् । यत् किंच दुरितं कायिकं मयि । यद्वाहमभिदुद्रोह अद्रोग्धव्यं मनसा द्रुग्धवान् । यच्च मानसमित्यर्थः । यद्वा शेपे 'शप आक्रोशे', आकुष्टवानहम् । यच्च वाचिकमित्यर्थः । उतानृतम् असत्यजनितं यच्चानृतवचन(मिति ?) निमित्तमित्यर्थः ॥ २२ ॥

वेङ्कटमाधवीयम् ।

इदमापः । इदं दुरितमापोऽपनयत यत्किंच मय्यस्ति, यद्वाहमद्रोग्धव्येभ्यः पित्रादिभ्योऽभिदुद्रोह, यद् वा शशपानस्यानृतम् । अनृतेऽर्थे शपथं कृतवानित्यर्थः ॥ २२ ॥

आपोअद्यान्वचारिषंरसेनसमगस्महि ।

पयस्वानग्नआगहितंमासंसृजवर्चसा ॥ २३ ॥

आपः । अद्य । अनु । अचारिषम् । रसेन । सम् । अगस्महि । पयस्वान् । अग्ने । आ । गहि । तम् । मा । सम् । सृज । वर्चसा ॥ २३ ॥

स्कन्दस्वामीयम् ।

आप इति द्वितीयार्थे प्रथमा । अपः । अद्य अन्वचारिषम् । चरतिर्गत्यर्थः । गतवानहम् । यदपां माहात्म्यं तत् प्रकाशितमित्यर्थः । यां यां देवतां निराह तस्यां तस्यां तद्भाव्यमनुभवतीति स्मरणात् तद्भाव्यप्रतिपत्तेः । अपां रसेन समगस्महि सङ्गता वयम् । अध्यर्धान्त्याग्निदेवता । सूक्तस्य ऋषेर्वा अन्त्या अध्यर्धाग्निदेवता । पयस्वान् हविर्लक्षणेनान्नेन तद्वान् मयोपकल्पितहविष्कः सन्नित्यर्थः । अथवा यन्मह्यं दास्यतेऽन्नं तद्वान् । तद् गृहीत्वेत्यर्थः । हे अग्ने! आगहि आगच्छ । आगत्य च योऽहं तुभ्यं हविषो दाता[1] होता वा, तं मा मां संसृज सम्बन्धय वर्चसा दीप्त्यान्नेन वा । वर्चो मह्यं देहीत्यर्थः ॥ २३ ॥

---

१. 'ते' ख. पाठः. २. 'स्यास्तस्यास्तद्भा' ग. पाठः.

वेङ्कटमाधवीयम् ।

आपो अद्य । उदकान्यद्यान्वचारिषमपां रसेन च सङ्गताः । उक्तैकवचनबहुवचनयोः सङ्गतिः । रसवानग्ने ! मम समीपमागच्छ । तं मां त्वं वर्चसा संसृजाप्सु स्थि(ते रे-रवे)ति ॥ २३ ॥

संमाग्नेवर्चसासृजसंप्रजयासमायुषा ।

विद्युर्मेअस्यदेवाइन्द्रोविद्यात्सहऋषिभिः ॥ २४ ॥

सम् । मा । अग्ने । वर्चसा । सृज । सम् । प्रऽजया । सम् । आयुषा । विद्युः । मे । अस्य । देवाः । इन्द्रः । विद्यात् । सह । ऋषिऽभिः ॥ २४ ॥

स्कन्दस्वामीयम् ।

समित्युपसर्गः सृजेत्याख्यातेन सम्बन्धयितव्यः । मा हे अग्ने ! वर्चसा संसृज । प्रजया संसृज । आयुषा । जीवितमायुरुच्यते । भवत्प्रसादाद् देवा विद्युः जानीयुः । ज्ञानेन चास्य करणं लक्ष्यते । कुर्युः इत्यर्थः । लोकेऽपि हि यो दर्शनया कारयितुमिष्यते स उच्यते इदं जानीहीति । कस्य विद्युः । मे मम । किम् । अस्य । सं माग्ने ! वर्चसा सृजेत्येनमादेः कामस्यायमन्वादेशः । अनुक्तत्वात् द्वितीयार्थे चात्र षष्ठी । एतं कामम् । के । देवा मरुदादयः । न च केवलाः, किन्तर्हि, इन्द्रोऽपि विद्यात् सह ऋषिभिः । देवसामान्येऽन्तर्भूतस्यापीन्द्रस्येह पृथगुपादानं प्राधान्यख्यापनार्थम् । 'ब्राह्मणा आयाता उपाध्यायदेवदत्तोऽप्यायात' इति यथा, तथा भगवतोऽग्नेः प्रसादाद् विद्युर्देवा इन्द्रश्चेत्येवमग्नेः प्राधान्यादाग्नेयत्वस्याविरोधः । केचित्तु देवानामिन्द्रस्य च स्वप्राधान्याद् वैश्वदेवीमैन्द्रीं वैतामृचं मन्यन्ते । एवं ह्याह— सं मेति तिस्रो वैश्वदेवी प्राजापत्याग्नेयी चेति ॥ २४ ॥

वेङ्कटमाधवीयम् ।

सम्माग्ने ! 'समगत मामग्ने ' वर्चः प्रभृतिभिस्त्वं मां देवादयश्च जानीयुः ॥ २४ ॥

इति प्रथमस्य द्वितीये द्वादशो वर्गः ॥

इति प्रथमे मण्डले पञ्चमोऽनुवाकः ।

कस्यनूनंकतमस्यामृतानांमनामहेचारुदेवस्यनाम ।
कोनोमह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच ॥ १ ॥

कस्य । नूनम् । कतमस्य । अमृतानाम् । मनामहे । चारु । देवस्य । नाम । कः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥ १ ॥

स्कन्दस्वामीयम् ।

कस्य नूनं शुनःशेप आजीगर्तिः । कस्य नूनमित्यादि शुनश्शेपो नामाजीगर्तेः पुत्रोऽपश्यत् । कस्य नूनं तु काम्याद्या । कस्य नूनमितीयमृषेः सूक्तस्याद्या कायिका प्रजापतिदेवत्या । अत्र ब्राह्मणपठितमितिहासं संक्षिप्याचक्षते —"हरिश्चन्द्रो नाम राजा अपुत्रः पुत्रार्थी नारदोपदेशाद् वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यक्ष्य इति । स रोहितः सन्नाहं प्राप । प्राप्तसन्नाहं पितोवाच अयं वरुणस्त्वामनेनोपायाजिकेन मह्यमदात् । हन्त त्वयाहमिमं यजा इति । स नेत्युक्त्वा धनुरादायारण्यं जगाम । अथ प्रतिज्ञातयागाकरणाद्धरिश्चन्द्रं वरुणो जग्राह । तस्य वरुणगृहीतस्य जलोदरं बभूव । तद् रोहितः शुश्राव । सोऽरण्यात् पितुः समीपं आजिगमिषन् अजीगर्तनामानं बुभुक्षापरीतं ददर्श । तस्येमे पुत्रा बभूवुः । ज्येष्ठकनिष्ठौ शुनःपुच्छशुनोलाङ्गूलौ मन्त्रद्रष्टारौ । शुनःशेपस्तु मध्यमः अमन्त्रदृक् । तमजीगर्तं रोहित उवाच अहं ते शतं गवां ददामि । अहमेषामेकेनात्मानं निष्क्रीणा इति । स बुभुक्षापरीतत्वाच्छोकाचास्मप्रादुर्भावं शुनःशेपमन्यं मन्यमानः शुनःशेपं विचिक्रि(ये) । एवं हि पौराणिकाः स्मरन्ति —

"परितोषाद् भयाच्छोकात् सुखदुःखाच्च पञ्चधा ।
ऋषीणां तारकान्येन लक्षणेन यदृच्छया ॥
मन्त्राः प्रादुर्भवन्त्यादौ पूर्वमन्वन्तरस्य ह ।"

इति । तं क्रीतमादाय पितृसकाशं गत्वा रोहितः पितरमुवाच अनेनाहमात्मानं निष्क्रीणा इति । अथैनमादाय हरिश्चन्द्रो वरुणमुवाच अनेन त्वा यजा इति ।

१. 'का', २. 'भ' ख. पाठः.

तथेति वरुण प्रतिपेदे । तस्मिन् यज्ञे विश्वामित्रजमदग्निवसिष्ठायास्या होताध्वर्युर्ब्रह्मोद्गाता बभूवु । यूपे शुनश्शेपस्य नियोक्ता विशसिता च न कश्चिद् भवितुमियेष । अथाजीगर्त उवाच तेन शतेन गवामहमेवैन नियुञ्जे विशसानि चेति । तथेति प्रतिपन्ने नियुज्य विशसितुमसिं निश्य (त् ? न्) शुनश्शेपमुपजगाम । अथ शुनःशेपो मेने माममानुषमिवेमे विशसिष्यन्ति । हन्ताह देवता उपधावामीति । स प्रजापतिमेव प्रथम देवतानामुपससार 'कस्य नून कतमस्यामृतानामि'त्येतयर्चे''ति । कस्य प्रजापते । नूनमिति पदपूरण । कीदृशस्य । कतमस्य, सर्वप्राणिना सुखतमस्य । क । (अमृतानाम्) । निर्धारण एषा षष्ठी, देवाना मध्ये । मनामहे । यद्यप्यय याच्ञाकर्मसु पठित, तथापीह याच्ञाया असम्भवान्मन्यतेरर्चतिकर्मण इद रूपम् । मन्यामहे स्तुम । चारु शोभन देवस्य नाम । स्तुत्या चात्र नामवत एव स्तुतिर्लक्ष्यते । प्रजापति देव स्तुम इत्यर्थ । स्तुतश्च सन् क न अस्मभ्य मह्या अदितये । अदितिशब्दोऽदीनवचन. । मह्ते अदीनत्वाय । पुनर्दात् ददातु । किम् । सामर्थ्याद्दायु । अथवा अदितय इति द्वितीयार्थे चतुर्थी । महददीनत्व पुनर्ददातु, येन क्रीतोऽह तद्वशवर्तिता व्यावर्तये । पुनरप्यदीन मा करोत्वित्यर्थ । अथवा अदितिरिति वाङ्नाम । महती वाच पुनर्ददातु, येनान्या अन्या अपि देवता स्तुम इत्यर्थ । किञ्च प्रजापतेरेव प्रसादात् पितर च दृशेय मातर च । जीवितमनेनाशास्यते । जीवन् मातापितरौ शक्नोति द्रष्टुम् ॥ १ ॥

वेङ्कटमाधवीयम् ।

कस्य नून शीघ्र शेपम् । क कतम इति प्रजापति पृच्छ(न्ती ? ति) । इदानीं देवाना मध्ये कस्य शोभन नाम वयमुच्चारयाम । स प्रजापतिर्मुमूर्षूनस्मान् पुनरपि महत्यै पृथिव्यै ददातु । ततोऽह मातापितरौ पश्येयम् ॥ १ ॥ अनया गतोत्तरेति ॥

''प्रजापतिस्त्वाच अग्निर्वै देवाना नेदिष्ठस्तमेवोपधावेति । सोऽग्निमुपससार 'अग्नेर्वय प्रथमस्यामृतानामि'त्येतयर्चा ।''

अग्नेर्वयंप्रथमस्यामृतानांमनामहेचारुदेवस्यनाम ।
सनोमह्याअदितयेपुनर्दात्पितरंचदृशेयंमातरंच ॥ २ ॥

अग्नेः । वयम् । प्रथमस्य । अमृतानाम् । मनामहे । चारु ।

देवस्य । नाम । सः । नः । मह्यै । अदितये । पुनः । दात् । पितरम् । च । दृशेयम् । मातरम् । च ॥ २ ॥"

स्कन्दस्वामीयम् ।

अग्नेर्ऋक् । अग्निदेवतेयमृक् । अग्नेर्वयं प्रथमस्य उत्कृष्टस्य अमृतानां मध्ये मनामहे इत्याद्युक्तम् । अत्र च तुल्यार्थत्वात् पुनरध्ययने पदकाराभिप्रायः पर्येष्यः ॥ २ ॥

"तमग्निरुवाच सविता वै प्रसवानामीशे । तमेवोपधावेति । स सवितारमुपससार 'अभि त्वा देव सवितरि'ति तृचेन ।"

अभि त्वा देव सवितरीशानं वार्याणाम् ।

सदावन्भागमीमहे ॥ ३ ॥

अभि । त्वा । देव । सवितः । ईशानम् । वार्याणाम् । सदा । अवन् । भागम् । ईमहे ॥ ३ ॥

स्कन्दस्वामीयम् ।

सवितुस्तृचः । सावित्रोऽयं तृचः । अभीत्युपसर्गोऽन्त्येन ईमह इत्याख्यातेन सम्बन्धयितव्यः । त्वा त्वां हे देव ! सवितः ! ईशानमीश्वरं वार्याणां वरणीयानाम् । हे सदावन् ! मरणादिभ्यः प्राणिनां सर्वदा रक्षितः ! । भागमंशम् ईमहे अभियाचामहे । कस्य भागम् । सामर्थ्यादायुषः । आयुर्वचन एव वा भागशब्दः । तद्धि सर्वप्राणिनो भजन्ते ॥ ३ ॥

वेङ्कटमाधवीयम् ।

अभि त्वा देव । अभियाचामहे देव ! सवितस्त्वां धनानामीश्वरं नरपशोरात्मीयं भागं सदा रक्षितः ! ॥ ३ ॥

यः कतमो भाग उच्यते —

यश्चिद्धि त इत्था भगः शशमानः पुरा निदः ।

अद्वेषो हस्तयोर्दधे ॥ ४ ॥

---

१. 'शोस्वात्मी' ष. पाठः,

यः । चित् । हि । ते । इत्था । भगः । शशमानः । पुरा । निदः । अद्वेषः । हस्तयोः । दधे ॥ ४ ॥

## स्कन्दस्वामीयम् ।

यच्छब्दो हस्तयोर्दधे इत्याख्यातेन सम्बन्धयितव्यः । चिद्धिशब्दौ पदपूरणौ । यो हस्तयोर्दधे निहितः । कस्य । ते तव । यस्त्वदायत्त इत्यर्थः । कीदृशः । इत्था । सत्यनामैतत् । सत्यं विसंवादवर्जितः । भगः भजनीयः । शशमानः । अर्चतिकर्मायम् । व्यत्ययेन चात्र कर्मणि कर्तृप्रत्ययः । स्तुत्य इत्यर्थः । अद्वेषः । अविद्यमानो द्वेषो यस्मिन् सोऽद्वेषः । नहि कश्चिद् आयुस्तदंशं वा द्वेष्टि । कदा पुनरायुर्भागमायुरेव वा हि याचध्वे । उच्यते । पुरा निदः । अत्यन्तनिन्दितात् तिर्यक्पशुसदृशान्मरणात् पुरा । यावत् तिर्यक्पशुवदत्यन्तकुत्सित विशस्यमाना म्रियामह इत्यर्थः । अथवा निन्दतिरत्र सामर्थ्याद् विशसनार्थः । पुरा विशसनात् विशसितुर्वा यावन्न विशस्यामह इत्यर्थः । अथैवमन्यथास्या ऋच पूर्वानपेक्षैवार्थयोजना — इत्थाशब्दोऽमुत्रेत्यस्यार्थे । भग इति धननामायम् । ते इत्था भगः अमुत्र स्वर्गे धनम् । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्य । तत् । शशमानः स्तुवन् अहं पुरा निदः मत्निन्दितपूर्वम् । अद्वेष द्वेषवर्जित । आत्मनः हस्तयोर्दधे धारयेयं, मह्यं दद्या इत्यर्थ । यद्वृत्तेनासम्बन्धाच्छान्दसत्वान्निपाताभाव इति व्याख्येयम् ॥ ४ ॥

## वेङ्कटमाधवीयम् ।

यश्चिद्धि । य एवंविधो भगः सर्वैरेव स्तूयमानो द्वेष्टृवर्जितो निन्दितुर्मनुष्यात् पूर्वमेव स्तोतुर्हस्तयोरित्थं निदधे । इत्यत्र सम्बन्ध ॥ ४ ॥

भगंभक्तस्यतेवयमुदंशेमतवावसा ।

मूर्धानंरायआरभे ॥ ५ ॥

भगऽभक्तस्य । ते । वयम् । उत् । अशेम । तव । अवसा । मूर्धानम् । रायः । आऽरभे ॥ ५ ॥

१. 'स निन्दिता तत पूर्वः अ' क ख पाठ २ 'तुमनु' ग. पाठ. ३. 'नृ' ख. पाठ;

स्कन्दस्वामीयम् ।

भगभक्तस्य । भगो देवः तेनापि सेवितस्य, भजनीयेन वा हविषा स्तोत्रेण वा सर्वमनुष्यैः सेवितस्य । तव स्वभूता वयम् । उदशेम अतोऽप्यूर्ध्वं प्राप्नुयाम । किम् । आयुः । अवसा हेतुना । त्वया अतो मरणाद् रक्षिताः सन्त इत्यर्थः । नच केवलमायुः, किं तर्हि, मूर्धानं रायः । धनस्य यच्छिरोभूतम् । उत्कृष्टं च धनमित्यर्थः । उपभोगान् वा आरब्धुं उपभोक्तुं यष्टुं वेत्यर्थः । यत् त्वस्या ऋचः "भगभक्तस्य भागो वे"ति भगदेवत्यत्वं शौनकेनोक्तं, तद् भगस्योपसर्जनत्व........वचनत्वात् । भगशब्दस्य "स सवितारमुपससार अभि त्वा देव सवितरित्येतेन तृचेने"ति ब्राह्मणस्य प्रत्यक्षत्वाद् येनाभिप्रायेणोक्तं स पर्येष्यः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

भगभक्तस्य । तेन भाग्येन सम्भक्तस्य तव वयं रक्षणेनोद्व्याप्नुमो धनस्य परमं पदमारब्धुम् ॥ ५ ॥

इति प्रथमस्य द्वितीये त्रयोदशो वर्गः ॥

---

"तं सवितोवाच वरुणाय वै राज्ञे नियुक्तोऽसि । तमेवोपधावेति । स वरुणं राजानमुपससार अत उत्तराभिरेकत्रिंशता ।"

नहिते॑क्ष॒त्रंनसहो॒नम॒न्युंवय॑श्च॒नामीप॒तय॑न्तआ॒पुः ।

नेमाआपो॑अनिमि॒षंचर॑न्ती॒र्नयेवात॑स्यप्रमि॒नन्त्यभ्व॑म् ॥

न॒हि । ते॒ । क्ष॒त्रम् । न । सहः॑ । न । म॒न्युम् । वयः॑ । च॒न । अ॒मी इति॑ । प॒तय॑न्तः । आ॒पुः । न । इ॒माः । आपः॑ । अ॒नि॒ऽमि॒षम् । चर॑न्तीः । न । ये । वात॑स्य । प्र॒ऽमि॒नन्ति॑ । अभ्व॑म् ॥ ६ ॥

स्कन्दस्वामीयम् ।

परं शेपश्च वारुणः । परं सूक्तमेकविंशकम्, अस्य शेपो दशर्चः, एतदुभयमपि वरुणदेवतम् । वरुणश्चात्रो ........स्य आदित्यः । न हि ते

---

१. 'तेन वा' क. ख. पाठः. २. 'त्रोक्तस्थान वा' ग. पाठः.

क्षत्र धन बल वा सेनालक्षणम्। नापि सह शारीर बलम्। नापि मन्यु क्रोधम्। वयश्च पक्षिणः। चन अप्यर्थे। पक्षिणोऽप्यमी। पतयन्त गच्छन्त आपु प्राप्नुवन्ति, अतिमहत्त्वात्। नेमा नापि इमा आप अनिमिष सतत चरन्ती गच्छन्त्य। नापि ये वातस्य प्रमिनन्ति। 'मीङ् हिंसायाम्'। हिंसन्ति। अभ्वम्। अभ्वमिति महन्नाम। महत्त्वम्। कस्य?। सामर्थ्याद् गते। वातादपि ये शीघ्रगतिकरा इत्यर्थ। के ते। मरुतो वान्ये वा केचिन्मनआदय ॥ ६ ॥

### वेङ्कटमाधवीयम्।

नहिते। नहि तव वरण! बलमभिभवसामर्थ्यं शत्रूणामभिमनन च महता वेगेन पतयन्त इयेनादयोऽप्यापु, न चेमा आप सतत चरन्त्य, नच ये पर्वतादयो वातस्यापि महत्ता प्रहिंसन्ति ॥ ६ ॥

अबुध्ने राजा वरुणो वनस्योर्ध्वं स्तूपं ददते पूतदक्षः।
नीचीनाः स्थुरुपरि बुध्न एषामस्मे अन्तर्निहिताः केतवः स्युः ॥

अबुध्ने। राजा। वरुणः। वनस्य। ऊर्ध्वम्। स्तूपम्। ददते। पूतऽदक्षः। नीचीनाः। स्थुः। उपरि। बुध्नः। एषाम्। अस्मे इति। अन्तः। निऽहिताः। केतवः। स्युरिति स्युः ॥ ७ ॥

### स्कन्दस्वामीयम्।

बुध्नोऽधोभाग। स इतरयोर्भागयोराश्रयं। बुध्नत्वाश्रयत्वयो सम्बन्धाद् बुध्नशब्देनाश्रयो लक्ष्यते। अबुध्ने अनाश्रये अनालम्बनेऽन्तरिक्षे। राजा दीप्त ईश्वरो वा वरुण। वनस्योर्ध्वं स्तूप ददते पूतदक्ष। वनमिति रश्मिनाम। बहुवचनस्य स्थान एकवचनम्। स्तूपशब्द सङ्घातवचन। 'विश्वेदेवा पुष्क(रे)त्वाददन्त', 'ददते मि'त्यादिप्रयोगदर्शनाद् ददतिर्धारयतिकर्मा। रश्मीना सङ्घातमूर्ध्वं धारयतीत्यर्थ। कीदृश। पूतदक्ष शुद्धबल। नचोर्ध्वमेव, किं तर्हि, नीचीना अधोमुखा स्थु। तिष्ठन्त्यनेन रश्मय। उपरि बु(ध्ने[२]ध्न) आश्रयो मण्डलाख्यं एषाम्। अनाश्रयेऽप्यन्तरिक्षे आदित्यमण्डलस्योर्ध्वमधस्ताच रश्मीन् धारयतीत्यर्थ। पर पादोऽन्यार्थ। तत्सम्बन्धार्थं

* ग। अतो बुध्ने यु', २ ब, ३ 'स्थे, ४ 'इया एव वाक्यप्रसिद्ध्यर्थं य' इ ख पा०.

यत्तच्छब्दौ योग्यार्थसम्बन्धावध्याहर्तव्यौ । य इदं करोति तस्य प्रसादेन । अस्मे अस्माकम् अन्तः मध्ये मनसि निहिताः केतवः प्रज्ञाः स्युः । जीवनमनेन प्रकारेणाशास्यते । जीवतो ह्यन्तः प्रज्ञा भवन्ति, न मृतस्य । अथवा केतवोऽत्र प्रज्ञानात्मका रश्मयः प्रादुर्भवन्ति । तेनेदमादित्यरश्मिदर्शनद्वारेण चिरजीवित्वमाशास्यते ॥ ७ ॥

### वेङ्कटमाधवीयम् ।

अबुध्ने राजा । अमूलेऽनालम्बनेऽन्तरिक्षे वरुणो राजा तेजस उदकस्य वा सङ्घातमूर्ध्वं धारयति शुद्धबलः । ते च रश्मयो नीचीनामास्तिष्ठन्ति । तेषामेषां मूलमुपरि भवति । अस्माकमन्तरमृतानां निहितानि भवन्तु प्रज्ञानानि ॥ ७ ॥

उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ ।
अपदे पादा प्रतिधातवेऽकरुतापवक्ता हृदयाविधश्चित् ॥ ८ ॥

उरुम् । हि । राजा । वरुणः । चकार । सूर्याय । पन्थाम् । अनुऽएतवै । ऊम् इति । अपदे । पादा । प्रतिऽधातवे । अकः । उत । अपऽवक्ता । हृदयऽविधः । चित् ॥ ८ ॥

### स्कन्दस्वामीयम् ।

उरुं विस्तीर्णम् । हिशब्दस्तु पदपूरणः । राजा वरुणश्चकार । कस्मै । सूर्याय । मण्डलमत्र सूर्यशब्देनोच्यते । तदर्थं किम् । पन्थां पन्थानम् । क । सामर्थ्यादन्तरिक्षे । किमर्थम् । अन्वेतवै आनुपूर्व्येण गन्तुम् । सूर्य आनुपूर्व्येणास्यतीत्येवमन्तरिक्षे विस्तीर्णं पन्थानं कृतवानित्यर्थः । अपदे पदं यत्र निधातुं न शक्यते अप्रतिष्ठत्वात् तदपदमन्तरिक्षं, तत्र । पादा आत्मीयौ पादौ । प्रतिधातवे । प्रतीत्येष नीत्येतस्य स्थाने । निधातुम् । अकः करोति अप्रतिष्ठेऽप्यन्तरिक्षे पदं निधत्त इत्यर्थः । उत अपि च । अपवक्ता अपवदिता । कस्य । हृदयाविधश्चित् । परुषवचनायोग्यव्यवहारसमाचरणादिभिर्हृदयं यो विध्यति पीडयति स हृदयावित् तस्य । चिच्छब्दः पदपूरणः । अथैवमन्यथास्य

---

१. 'द । पुरु ष' ख. पाठः

पदस्यार्थयोजना — अपेत्य वक्ता अपवक्ता । वक्तुं समर्थेभ्यः पृथग्भूय एक एव वक्तेत्यर्थः । कस्य । सामर्थ्याद् यावत्किंचिद् दुर्वचस्तस्य सर्वस्य । हृदयाविधश्चित्, चिच्छब्दोऽप्यर्थे । षष्ठीनिर्देशाच्च सकाशादिति वाक्यशेषः । हृदयं हृदयेन यो विध्यति सम्यग् जानाति स हृदयावित्, तस्यापि सकाशात् ॥ ८ ॥

## वेङ्कटमाधवीयम् ।

उरु हि । विस्तीर्णं हि राजा वरुणश्चकार सूर्यस्य गमनार्थं पन्थानम् । ततोऽपदमनालम्बनेऽन्तरिक्षे कृतवान् सूर्यस्य पदानि प्रतिधातुं पन्थानम् । सोऽयं हृदयाविधः शत्रोरपवक्तास्तु पराभावयितेति वदतु ॥ ८ ॥

श॒तं ते॑ राजन्भि॒षजः॑ स॒हस्र॑मु॒र्वी ग॑भी॒रा सु॑म॒तिष्टे॑ अस्तु ।

बाध॑स्व दू॒रे निर्ऋ॑तिं परा॒चैः कृ॒तं चि॒देनः॒ प्र मु॑मुग्ध्य॒स्मत् ॥ ९ ॥

श॒तम् । ते॒ । रा॒ज॒न् । भि॒षजः॑ । स॒हस्र॑म् । उ॒र्वी । ग॒भी॒रा । सु॒ऽम॒तिः । ते॒ । अ॒स्तु॒ । बाध॑स्व । दू॒रे । निःऽऋ॑तिम् । प॒रा॒चैः । कृ॒तम् । चि॒त् । एनः॑ । प्र । मु॒मु॒ग्धि॒ । अ॒स्मत् ॥ ९ ॥

## स्कन्दस्वामीयम् ।

शतं ते तव हे राजन्! वरुण! । भिषजः । भिषग् वैद्य उच्यते । आर्तानां जीवनोपायैः सम्बन्धो भिषक्शब्देनोपलक्ष्यते । अस्मदादीनां आर्तानां जीवनोपाया इत्यर्थः । न शतमेव केवलं, किं तर्हि, सहस्रं च । अत्यन्तबहव इत्यर्थः । अतो ब्रवीमि उर्वी विस्तीर्णा । गभीरा अन्यैर्दुरवगाहा । सुमतिः शोभनानुग्रहात्मिका बुद्धिस्ते तव अस्मास्वस्तु । अनुग्राहकोऽस्माकं भवेत्यर्थः । बाधस्व दूरे । दूरं गमयेत्यर्थं । किम् । निर्ऋतिं मृत्युदेवताम् । पराचैः परागमनैः पराङ्मुखमित्यर्थः । किञ्च कृतमप्यस्माभिरेनः प्रमुमुग्धि । प्रपूर्वो मुञ्चतिरपनये । अपनय । अस्मत् अस्मत्तः ॥ ९ ॥

---

१. 'प.।', २. 'विप' स पाठ.

वेङ्कटमाधवीयम् ।

शतं ते । शतं ते राजन् भेषज्यानि सहस्रं च । विस्तीर्णा गम्भीरा[1] मद्विषया सुमतिस्तवास्तु । स त्वमसमत्तः कृच्छ्रं दूरे पराङ्मुखं बाधस्व । कृतं च पापं प्रमोचयेति ॥ ९ ॥

अमीयऋक्षानिहितासउच्चानक्तंददृश्रेकुहचिद्दिवेयुः ।
अदब्धानिवरुणस्यव्रतानिविचाकशच्चन्द्रमानक्तमेति ॥

अमी इति । ये । ऋक्षाः । निऽहितासः । उच्चा । नक्तम् । ददृश्रे । कुह । चित् । दिवा । ईयुः । अदब्धानि । वरुणस्य । व्रतानि । विऽचाकशत् । चन्द्रमाः । नक्तम् । एति ॥ १० ॥

स्कन्दस्वामीयम् ।

अमी ये ऋक्षाः । ऋक्ष इति नक्षत्रनाम, अमूनि यानि नक्षत्राणि निहितासः निहितानि । उच्चा उर्ध्वद्युलोके । नक्तं रात्रौ । ददृश्रे दृश्यन्ते । कुहचित् । कुहशब्दः केत्यस्य पर्यायः । चिच्छब्दोऽप्यर्थे, क्वापि । दिवा अहनि ईयुः गच्छन्ति । दिवा ह्येतानि न दृश्यन्ते । अतो न जानीमः क्वापि गच्छन्तीति । अथवा कुहचिद् दिवेत्येते समानाधिकरणे । ईयुरित्यपि शुद्धोऽप्येतिः सामर्थ्यादाङ्पूर्वार्थे । क्वचिदहन्यागच्छन्ति । क्वचिदेवाहनि दृश्यन्ते, न सर्वत्र इत्यर्थः । यत्रैव ह्यहनि समस्तं राहुणा ग्रस्यते तत्रैव नक्षत्राणि दृश्यन्ते, नान्यत्र । यान्यमूनीत्युद्देशात् प्रतिनिर्देशार्थं एतच्छब्दोऽत्राध्याहर्तव्यः । एतानि अदब्धानि अहिंसितानि वरुणस्य व्रतानि कर्माणि । वरुण एव तान्येतानि करोतीत्यर्थः । कथम् । वरुणो हि दिवा स्वभासा नक्षत्राणां भासः छादयति न रात्रौ ततो रात्रौ दृश्यन्ते, न दिवा । नचैतान्येव केवलानि, किं तर्हि, योऽप्ययं विचाकशत् । 'काशृ दीप्तौ' । विविधं दीप्यमानश्चन्द्रमा नक्तमेति । एषोऽपि वरुणस्यैव कर्म । एतमपि वरुण एव एवं करोतीत्यर्थः । तदीयो ह्येको रश्मिः सुषुम्नाख्यश्चन्द्रमसमपि दीप्यते । तेनायं विचाकशत् चन्द्रमा नक्तमेति । अथवा अमी य ऋक्षा इति यच्छब्दो बहुवचनान्तो व्यत्ययेन पुँल्लिङ्गश्च । तथा दर्शनादिभिः क्रियाभिः सम्बध्यते न

१. 'रविष' ख. पाठः

ऋक्षैः । कुत एतत्, यच्छब्दस्योद्देशार्थत्वादुद्दिष्टस्य चावश्यं प्रतिनिर्दिष्टत्वात्, अत्राप्रतिनिर्देशात् प्रतिनिर्देशकल्पनायामपि चैषामेकवाक्यत्वप्रत्य(य)सम्भवात्, अदब्धानि वरुणस्य व्रतानीति च कर्मणामुपादानात् क्रियोद्देशार्थत्वेन बहुवचनं पुंलिङ्गता च । एवं योजना — यन्नक्षत्राणि नक्तं दृश्यन्ते, यच्च दिवापि गच्छन्ति, यच्च विचाकशच्चन्द्रमा नक्तमेति, एतानि त्रीण्यपि अदब्धानि वरुणस्य व्रतानीति ॥ १० ॥

वेङ्कटमाधवीयम् ।

अमी य ऋक्षाः । नक्षत्राणि रात्रौ दृश्यन्ते । क्व तानि दिवा गच्छन्ति । तथा दीप्यमानश्चन्द्रो रात्रौ गच्छति । भवति च दिवा तिरोहितः । तानीमानि दानुभिरहिंसितानि वरुणस्य व्रतानीति ॥ १० ॥

इति प्रथमस्य द्वितीये चतुर्दशो वर्गः ॥

तत्त्वा॑ यामि॒ ब्रह्म॑णा॒ वन्द॑मान॒स्तदा शा॑स्ते॒ यज॑मानो ह॒विर्भिः॑ ।
अहे॑ळमानो वरुणे॒ह बो॒ध्युरु॑शंस॒ मा न॒ आयुः॒ प्र मो॑षीः ॥ ११ ॥

तत् । त्वा॒ । या॒मि॒ । ब्रह्म॑णा । वन्द॑मानः । तत् । आ । शा॒स्ते॒ । यज॑मानः । ह॒विःऽभिः॑ । अहे॑ळमानः । व॒रु॒ण॒ । इ॒ह । बो॒धि॒ । उरु॑ऽशंस । मा । नः॒ । आयुः॑ । प्र । मो॒षीः॒ ॥ ११ ॥

स्कन्दस्वामीयम् ।

तत् त्वा यामि । याच्ञाकर्माय, याचे । ब्रह्मणा अनेन ऋग्लक्षणेन वन्दमानः स्तुवन् । किं पुनस्तत् । सामर्थ्यादायुः । तदाशास्ते प्रार्थयते अयं जलोदरगृहीतो हरिश्चन्द्राख्यो यजमानः हविर्भिश्चरुभिः । एतज्ज्ञात्वा अहेळमानः अक्रुध्यन् हे वरुण! इह कर्मणि अवस्थाया वा वर्तमानयोरावयोर्बोधि बुध्यस्व । शृणु याच्ञामित्यर्थः । श्रुत्वा च हे उरुशंस! । उर्विति बहुनाम । शंसः स्तुतिः । बहुस्तुत! मा नः । 'असदो द्वयोश्च' (१- २- ५९)

इत्येवमेतद् बहुवचनम्। आवयोः आयुर्जीवितं प्रमोषीः। जीवयावामित्यर्थः॥ ११॥

### वेङ्कटमाधवीयम्।

तत् त्वा यामि। तत् त्वामहं याचामि स्तोत्रेण वन्दमानः। तदेवाशास्तेऽयं च हविर्भिन्द्रो यजमानो हविर्भिः। स त्वमकुध्यन् वरुणेह बुध्यस्व। तदाह — बहुस्तोम मास्माकमायुः प्रमोषीरिति॥ ११॥

तदिन्नक्तंतद्दिवामह्यमाहुस्तदयंकेतोहृदआविचष्टे।
शुनःशेपोयमह्वद्गृभीतःसोअस्मान्राजावरुणोमुमोक्तु॥

तत्। इत्। नक्तम्। तत्। दिवा। मह्यम्। आहुः। तत्। अयम्। केतः। हृदः। आ। वि। चष्टे। शुनःशेपः। यम्। अह्वत्। गृभीतः। सः। अस्मान्। राजा। वरुणः। मुमोक्तु॥ १२॥

### स्कन्दस्वामीयम्।

तदिन्नक्तम्। इच्छब्द एवार्थे। तदेव नक्तं, तदेव दिवा। सततमित्यर्थः। मह्यमाहुः कथयन्ति। के। सामर्थ्यात् सुहृदः ऋषयो ब्राह्मणा वा प्राणाधिदेवता वा। तदेवायं केतः प्रज्ञानम्। हृद हृदयस्य सम्बन्धी। आविचष्टे आभिमुख्येन कथयति। हृदयेनाप्यहं तदेव जानामीत्यर्थः। किं पुनस्तत्। सामर्थ्याद् वरुण. आर्तानामार्तिहर इत्येतत्। यत एवमतो ब्रवीमि शुनःशेपो यमह्वत्। अतीतकल्पशुनःशेपापेक्षया वायं प्रथमपुरुषप्रयोगः। आत्मन एव वा परोक्षरूपेण प्रथमपुरुषेणाभिधानम्। अतीतकल्पे यः शुनःशेप आसीदहमेव वा सः गृभीतः गृहीतः। सोऽस्मान् राजा वरुणो मुमोक्तु अतो यूपात्॥ १२॥

### वेङ्कटमाधवीयम्।

तदिन्नक्तम्। तदेव नक्तं तद् दिवा मह्यं सर्वे कथयन्ति वरुणस्त्वां मोक्तुमीष्ट इति। तदेव हृदयस्य च प्रज्ञा मह्यं विचष्टे ममापि तथा बुद्धिर्भवति। यूपे बद्धः शुनःशेपो यं देवमाहूतवान् स राजा वरुणोऽस्मान् मुमोक्तु॥ १२॥

शुनःशेपोह्यह्वद्गृभीतस्त्रिष्वादित्यंद्रुपदेषुबद्धः ।
अवैनंराजावरुणःससृज्याद्विद्वाँअदब्धोविमुमोक्तुपाशान् ॥

शुनःशेपः । हि । अह्वत् । गृभीतः । त्रिषु । आदित्यम् । द्रुऽपदेषु । बद्धः । अव । एनम् । राजा । वरुणः । ससृज्यात् । विद्वान् । अदब्धः । वि । मुमोक्तु । पाशान् ॥ १३ ॥

स्कन्दस्वामीयम् ।

शुन शेपो हि । हिशब्दो यस्मादर्थे । यस्माच्छुन शेपोऽह्वत् गृभीत आदित्यमदिते पुत्र त्रिषु द्रुपदेषु बद्ध । द्रुशब्दो दारुमयत्वाद् यूपे वर्तते । पदशब्द स्थानवचन । त्रिषु यूपप्रदेशेषु बद्ध इत्यर्थ । अध प्रदेशे पादयोर्बद्ध, मध्ये कट्याम्, उपरि शिरसि । यद्यपि चैकस्मिन् यूपप्रदेशे पशो शिरस्येव बन्धन विहित, नान्यत्र । तथापि पुरुषपशोरर्थात् कट्या पादयो श्चास्ति बन्धनम् । नहि शिरोमात्रबन्धनेन पुरुषो विशसितु निश्चल शक्यो धारयितुम् । यस्मादिति वचनात् तच्छब्दोऽध्याहर्तव्य । तस्मात् । आर्तानुकम्पत्वाद् एन शुन शेप राजा वरुण अवससृज्यात् । अवसर्गो नामाभ्यनुज्ञा । जीव मा रुमन मारयतेत्येवमनुजानीयादित्यर्थ । अनुज्ञाय च विद्वान् जानन् अस्माकमार्तता भक्तता वा । अदब्ध अहिंसित विमुमोक्तु पाशान् एतान्, यैर्वय बद्धा ॥ १३ ॥

वेङ्कटमाधवीयम् ।

शुन शेप । शुनश्शेपो[1] ह्यर्थे[2] देवमाहूतवान् गृहीतस्त्रिषु यूपस्य स्थानेषु बद्धोऽदिते पुत्रम् । स वरुणोऽवसृजतु विद्वानहिंसित पाशान् विमुमोक्तु[3] । पाशविमोचन कल्मषसर्गस्य ॥ १३ ॥

अवतेहेळोवरुणनमोभिरवयज्ञेभिरीमहेहविर्भिः ।
क्षयन्नस्मभ्यमसुरप्रचेताराजन्नेनांसिशिश्रथःकृतानि ॥
[१४ ॥

१ 'पाऽय' क पाठ २ 'यमा ग घ पाठ ३ 'द्' ख ग पाठ

अर्व । ते । हेळः । वरुण । नर्मःऽभिः । अर्व । यज्ञेभिः । ईमहे । हविःऽभिः । क्षयन् । अस्मभ्यम् । असुर । प्रचेत इति प्रऽचेतः । राजन् । एनांसि । शिश्रथः । कृतानि ॥ १४ ॥

## स्कन्दस्वामीयम् ।

अवेत्युपसर्ग ईमह इत्याख्यातेन सम्बध्यते । अवपूर्व ईमह इत्ययमपनयने वर्तते । अवेमहे अपनयामः । ते तव हेळः क्रोधम् । हे वरुण । नमोभिर्नमस्कारैः स्तुतिभिः । नच केवलैर्नमोभिः, किं तर्हि, अव यज्ञेभिरीमहे सोमयागैश्चापनयामः । हविर्भिः चरुपुरोडाशादिभिः । अपनीतक्रोधश्च त्वं क्षयन् । 'क्षि निवासगत्योः[1]'रित्यस्यायं व्यत्ययेन । निवसन् इहागच्छन् वा । अस्मभ्यमस्मदर्थम् । हे असुर! असवः प्राणाः, तद्वन्! । प्रचेतः! प्रकृष्टज्ञान! । राजन्! दीप्त! । ईश्वरो वा । एनांसि पापानि । शिश्रथः श्लथय मन्दविपाकानि कुरु । कृतानि । यान्यस्माभिः । एतदुक्तं भवति—यैः पूर्वकृतैरपुण्यैर्बन्धनं मरणं च प्रापिता वयं, तान्यतोऽपि तावत् परं मन्दविपाकानि कुरु, येन पुनरीदृशं दुःखं न प्राप्नुमः । एनांसीति पाशा वाभिप्रेताः । तानस्मात्त्रिशः[3] कृतान् शिश्रथः मुञ्चेत्यर्थः ॥ १४ ॥

### वेङ्कटमाधवीयम् ।

अप ते हेळः । अपगच्छत्विति याचामहे । विनाशयामस्तव वरुण ! नमस्कारैः क्रोधमेव यज्ञैर्हविर्भिश्च । निवसन्नस्मदर्थं बलवन् ! प्राज्ञ ! राजन् ! कृतानि पापानि विनाशय ॥ १४ ॥

उदुत्तमं वरुण पाशमस्मदवाधमं वि मध्यमं श्रथाय ।
अथा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ १५ ॥

उत् । उत्ऽतमम् । वरुण । पाशम् । अस्मत् । अव । अधमम् । वि । मध्यमम् । श्रथय । अथ । वयम् । आदित्य । व्रते । तव । अनागसः । अदितये । स्याम ॥ १५ ॥

---

१. 'वा । इतः अ', २. 'तथा वा पाशान् वा त एनांस्यभिप्रेतानि । ता', ३. 'जाहे मु' क. ख. पाठः. ४. 'मं' ग. पाठः.

## स्कन्दस्वामीयम्।

उदित्युपसर्गः श्रथायेत्याख्यातेन सम्बन्धयितव्यः। उच्छ्रथाय ऊर्ध्वं श्रथय। उत्तमं वरुण! रशनापाशम् अस्मत् अस्मत्तः। अवाधमम् अधममवि श्रथय। विमध्यमं श्रथाय मध्यमं श्रथय तत्रापि स्थितं विमुञ्चेत्यर्थः। अथ पाशत्रयविमोक्षानन्तरम्। वयं हे आदित्य! अदितेः पुत्र! व्रते यागकर्मणि तव स्वभूते त्वद्देवत्ये याग इत्यर्थः। अनागसः अपगतपापाः। अदितये। अदितिरिति वाङ्नाम। तादर्थ्ये चतुर्थी। स्तुतिलक्षणवागर्थं स्याम भवेम। त्वद्देवत्ये यागे त्वा स्तुयामेत्यर्थः॥ १५॥

## वेङ्कटमाधवीयम्।

उदुत्तमम्। उत्तमं वरुण! पाशम् अस्मत्तः श्लथय, अवमं मध्यमं विश्लथय, अवश्लथय अवमम्। अथ ऊर्ध्वमदिते पुत्र! त्वत्स्वामिके सन्ध्यावन्दनादिके व्रते प्रमादरहिताः अस्यै पृथिव्यै स्याम आगता सन्तः॥ १५॥

इति प्रथमस्य द्वितीये पञ्चदशो वर्गः॥

---

यच्चिद्धि ते विशो यथा प्र देव वरुण व्रतम्।

मिनीमसि द्यविद्यवि॥ १॥

यत्। चित्। हि। ते। विशः। यथा। प्र। देव। वरुण। व्रतम्। मिनीमसि। द्यविऽद्यवि॥ १॥

## स्कन्दस्वामीयम्।

यदिति निपातो यद्यपिशब्दस्यार्थे। चिच्छब्दोऽप्यर्थे। हिशब्दः पदपूरणः। यद्यपि ते तव विशो यथा यथैवान्ये मनुष्याः तद्वद् वयमपि हे देव! वरुण! व्रतं यागकर्म प्रमिनीमसि। 'मीञ् हिंसायाम्'। प्रकर्षेण हिंस्मः। द्यविद्यवि अहन्यहनि। का पुनर्यागकर्मणो हिंसा। प्रमादेनाकरणम्। यद्यप्यन्यमनुष्यवत् अहन्यहनि प्रमादेन यागं न कुर्मः इत्यर्थः। यद्यपीति वचनात् तथापीत्यध्याहार्यम्। उत्तरयैकवाक्यता तथापि मा न इत्यादि। अथवा यच्चिद्धि त इति यच्छब्दो लुप्तविभक्तिः यस्माच्छब्दस्य येशब्दस्य वार्थे। चिद्धिशब्दौ द्वावपि पदपूरणौ। प्रमिनीमसि इत्यपि 'माङ् माने' इत्यस्य रूपम्।

यस्माद् ये च वयं तवान्यमनुष्यवत् कर्म सायंप्रातरनुष्ठानं यागकर्म वा प्रमिनीमसि प्रकर्षेण मिनीमहे कुर्म इत्यर्थः । कदा । अहन्यहनि । तस्मात् तान् वा ॥ १ ॥

वेङ्कटमाधवीयम् ।

यच्चिद्धि । यद् वयं तवान्यमनुष्यवदसत्स्तोत्रादिकरणाद् व्रतमन्वहं हिंसामस्ततस्त्वं रक्षस्व इति । सूक्तोपक्रमेषु क्रियापदमनेकत्र न दृश्यमिति ॥ १ ॥

मानोवधार्यहत्नवेजिहीळानस्यरीरधः ।

माहृणानस्यमन्यवे ॥ २ ॥

मा । नः । वधार्य । हुत्नवे । जिहीळानस्य । रीरधः । मा । हृणानस्य । मन्यवे ॥ २ ॥

स्कन्दस्वामीयम् ।

मा नः अस्मान् । वधाय हत्नवे । वधस्ताडनम् । हत्नुः हननं मरणम् । ताडनाय मरणाय वा । जिहीळानस्य । हेळ इति क्रुध्यतिकर्मा । भूते चार्ये लिट् । पूर्वं क्रुद्धस्य । रीरधः । रध्यतिर्वशगमने । वशं नैषीः । यस्ताडयति मारयति तस्य पूर्वं क्रुद्धस्य मास्मान् वश्यान् कार्षीरित्यर्थः । मा हृणानस्य । हृणीरिति क्रोधनामसु पाठात् (हृ? हृणी)रिति क्रोधार्थोऽस्त्यवगम्यते । व्यत्ययेन वा श्नाविकरणः । धात्वन्तरं वा (प?)हृणावर्तमाने लट् । तदानीमेव क्रुध्यतः । मन्यवे क्रोधाय । योऽपि साम्प्रतमेव क्रोद्धुमिच्छति तस्यापि क्रोधार्थं मास्मान् वश्यान् कार्षीरित्यर्थः ॥ २ ॥

वेङ्कटमाधवीयम् ।

मा नो वधाय । मारमायुधाय हन्त्रे क्रुद्धस्य स्वभूताय वशं नय मा च हृणानस्य मन्यवे । हिंसापरो हृणानः ॥ २ ॥

विमृळीकार्यतेमनोरथीरश्वंनसंदितम् ।

गीर्भिर्वरुणसीमहि ॥ ३ ॥

वि । मृळीकार्य । ते । मर्नः । रथीः । अश्वम् । न । सम्ऽदि॑तम् । गीःऽभिः । वरुण । सीमहि ॥ ३ ॥

स्कन्दस्वामीयम् ।

वीत्युपसर्ग सीमहीत्याख्यातेन सम्बन्धयितव्य । मृळीकाय सुखाय जीवितलक्षणायात्मन ते तव स्वभूत मन हविर्भूतो मयाय भक्षयितव्य इत्येव रूप यदस्मास्वाबद्धचित्त तत् । रथीरश्व न सन्दितम् । दितिरत्र बन्धनार्थे "शुनश्चिच्छेप निदितम्" इति यथा । यथा रथी सारथिरश्व रथे बद्धमेव वय गीर्भि स्तुतिभि हे वरुण । विषमहि । विपूर्वस्यतेरिद रूपम् । स्यतिश्चोपसृष्टो विमोचने वर्तते । विमुञ्चाम । अथवा 'दिञ् बन्धन' इत्यस्यैतद्रूपम् । विगतबन्ध कुर्म । अपनयाम इत्यर्थ ॥ ३ ॥

वेङ्कटमाधवीयम् ।

वि मृळीकाय । सुखार्थं सारथिर्बद्धमिवाश्व तव क्रुद्ध मन स्तुतिभिर्विमोच याम[1] ।

पराहिमेविमन्यवःपतन्तिवस्यइष्टये ।
वयोनवसतीरुप ॥ ४ ॥

परा । हि । मे । विऽमन्यवः । पतन्ति । वस्यःऽइष्टये । वयः । न । वसतीः । उप ॥ ४ ॥

स्कन्दस्वामीयम् ।

परा वीत्युपसर्गौ पतन्तीत्याख्यातेन सम्बन्धयितव्यौ । हिशब्द पदपूरण । मे मम । मन्यव । 'मन्यच्छन्दसदि'ति कान्तिकर्मसु पाठान्मन्यतिरत्र कान्तिकर्मा । मननानि मन्यव कामा । विपरापतन्ति विविध त्वा प्रति प्राप्नुवन्ति । वस्यइष्टये । 'इष गतौ' । शुद्धोऽपि चात्र सामर्थ्यात् सोपसर्गार्थो द्रष्टव्य । वसुनोऽधिगत्यै । त्वत्तो धन लब्धुमित्यर्थ । कथ पुन परापतन्ति । उच्यते । वयो न पक्षिण इव । वसतीरुप । उपशब्द प्रतिशब्दस्यार्थे स्थानि निवासस्थानानि प्रति ॥ ४ ॥

---

१ 'म इति ॥ प' ख, पाट

वेङ्कटमाधवीयम्।

परा हि मे मम विमन्यवः इच्छा बुद्धयः श्रेयस इच्छार्थं वरुणं राजानं प्रति परापतन्ति यथा पक्षिण आवासस्थानान्युपगच्छन्ति ॥ ४ ॥

कदाक्षत्रश्रियंनरमावरुणंकरामहे।

मृळीकायोरुचक्षसम् ॥ ५ ॥

कदा। क्षत्रऽश्रियम्। नरम्। आ। वरुणम्। करामहे। मृळीकाय। उरुऽचक्षसम् ॥ ५ ॥

स्कन्दस्वामीयम्।

कदा कस्यां वेलायाम्। क्षत्रश्रियं क्षत्रं बलं धनं वा श्रयति क्षत्रश्रीर्बलवान् धनवान् वा, तं क्षत्रश्रियम्। नरं मनुष्याकारम्। वरुणमाकरामहे अर्वागात्माभिमुखं करिष्याम इत्यर्थः। मृळीकाय सुखाय जीवितलक्षणायात्मनः। कीदृशम्। उरुचक्षसं बहूनां द्रष्टारं बहुदर्शनं वा। विमोचनविडम्बनात् परिदेवनैषा ॥ ५ ॥

वेङ्कटमाधवीयम्।

कदा क्षत्रश्रियम्। बलं यत्र यत्र श्रीः[1], कदा तं नेतारं वरुणम् अभिमुखं कुर्मः सुखार्थं बहूनां द्रष्टारम् ॥ ५ ॥

इति प्रथमस्य द्वितीये षोडशो वर्गः ॥

तदित्समानमाशातेवेनन्तानप्रयुच्छतः।

धृतव्रतायदाशुषे ॥ ६ ॥

तत्। इत्। समानम्। आशाते इति। वेनन्ता। न। प्र। युच्छतः। धृतऽव्रताय। दाशुषे ॥ ६ ॥

स्कन्दस्वामीयम्।

इच्छब्दः पदपूरणः। तत् समानं साधारणं वा। सहभूतौ आशाते व्याप्नुतो भक्षयतो वा। कौ। द्विवचननिर्देशात् साहचर्याच्च मित्रावरुणौ।

---

१. 'त्र श्रीः' ग. पाठः.

वेनन्ता कामयमानौ । किं पुनस्तत् । सामर्थ्याद् यद् यजमानः केवलाय हि वरुणाय मित्राय वा हविर्देदाति । न प्रयुच्छत । 'युच्छ प्रमादे' । न प्रमाद्यतः अवश्यमाशाते इत्यर्थः । किमर्थम् । धृतव्रताय । धृतमपरित्यक्तं स्वकर्म येन स धृतव्रतः तस्मै । दाशुषे यजमानाय । यजमानस्योपकर्तुमित्यर्थः । अथवैवमन्यथास्या ऋचो योजना— आशाते इति लोडर्थे लट् । तत् समानमश्नुवतां कामयमानौ । आत्मन एव वेदं परोक्षरूपेण प्रथमपुरुषेणात्मन एवाभिधानं द्रष्टव्यम् । आवां शुनःशेपहरिश्चन्द्रावश्नुवावहा इत्यर्थः । किं तत् । सामर्थ्यादायुः । किं कारणम् । यतो न प्रयुच्छतः । इदमपि पूर्ववत् प्रथमपुरुषेणात्मन एवाभिधानम् । यतो यागे स्तुतौ न प्रमाद्याव इत्यर्थः । किमर्थम् । धृतव्रताय दाशुषे । स्वकर्मणामपरित्यक्तत्वाद् धृतव्रतो वरुणः । स एव दाश्वान् स्तोतृभ्यः कामानां दातृत्वात् । तदर्थो वरुणार्थो यो यागः स्तुतिर्वा तत्र यतो न प्रमाद्याव इत्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

तदित्समानम् । तदानीमेव सहागच्छतो मित्रावरुणौ कामयमानौ । नच प्रमाद्यतो धृतकर्मणे यजमानाय कर्मफलप्रदानार्थमिति ॥ ६ ॥

यः कीदृशो वरुण उच्यते —

वेदा यो वीनां पदमन्तरिक्षेण पतताम् ।
वेद नावः समुद्रियः ॥ ७ ॥

वेद । यः । वीनाम् । पदम् । अन्तरिक्षेण । पतताम् । वेद । नावः । समुद्रियः ॥ ७ ॥

स्कन्दस्वामीयम् ।

वेद जानाति यो वरुणः । वीनां पदम् । अन्तरिक्षेण पततां गच्छताम् । दुर्ज्ञानं हि पांसुवर्जितेनान्तरिक्षेण गच्छतां पदम् । नच वीनामेव केवलं, किं तर्हि । वेद नावः पदमपि । समुद्रियः समुद्रियायाः समुद्रे भवायाः समुद्रेण गच्छन्त्या इत्यर्थः । एतदपि दुर्ज्ञानमेव ॥ ७ ॥

वेङ्कटमाधवीयम् ।

वेदाय । प्रधानात्यन्तरिक्षेण गच्छतां पक्षिणामावासस्थानं यत्र सायं वसन्ति । वेद च नावः समुद्रेण गच्छन्तीः । मनुष्यास्तु पततः पश्यन्ति विगच्छमानाश्च नावः न तु तेषामावासं विसर्गस्थानमिति ॥ ७ ॥

वेद॒मासो॑धृ॒तव्र॑तो॒द्वाद॑श॒प्रजा॑वतः ।
वेदा॒यउ॑प॒जाय॑ते ॥ ८ ॥

वेद॑ । मासः॑ । धृ॒तऽव्र॑तः । द्वाद॑श । प्र॒जाऽव॑तः । वेद॑ । यः ।
उ॒प॒ऽजाय॑ते ॥

स्कन्दस्वामीयम् ।

यश्च वेद मासः मासान् धृतव्रतः अपरित्यक्तस्वकर्मा द्वादश । कीदृशान् । प्रजावतः प्रजननवतः । उत्पत्तिमत इत्यर्थः । अथवा प्रजासहितान् । प्रजा अपि वेदेत्यर्थः । नच द्वादशैव केवलान्, किं तर्हि । वेदा यः योऽयम् उपजायते अधिमासकं त्रयोदशं तमपि ॥ ८ ॥

वेङ्कटमाधवीयम् ।

वेद मासः । वेद द्वादश मासान् धृतसन्ध्यावन्दनादिकर्मा स्वे स्वे काले प्रजायमानान् तृतीयैस्त्रयोदशमुपजायमानमधिमासं च वेत्ति ॥ ८ ॥

वेद॒वात॑स्यवर्त॒निमु॒रोर्ऋ॒ष्वस्य॑बृ॒ह॒तः ।
वेदा॒येअ॒ध्यास॑ते ॥ ९ ॥

वेद॑ । वात॑स्य । व॒र्त॒निम् । उ॒रोः । ऋ॒ष्वस्य॑ । बृ॒ह॒तः । वेद॑ ।
ये । अ॒धि॒ऽआस॑ते ॥ ९ ॥

स्कन्दस्वामीयम् ।

वेद वातस्य वर्तनिं गमनमागमनम् । कीदृशस्य । उरोः विस्तीर्णस्य । ऋष्वस्य । महन्नामैतत् । महतो बलवत इत्यर्थः । बृहतः । एतदपि महन्नामैव । वेगेन सम्बन्धेन त्वपुनरुक्ति कर्तव्यम् । महतः वेगेन शोभन इत्यर्थः । यश्च वेद ये अधि सर्वस्योपरि द्युलोके आसते देवाः (तान्) य एतानि वेद तस्मै वरुणाय न प्रयुच्छतः धृतव्रताय दाशुष इत्येवं यच्छब्दस्य पूर्ववाक्यता । यच्छब्दश्रुतेस्तच्छब्दमध्याहृत्योत्तरयैकवाक्यता योज्या । य एतानि वेद सः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

वेद वातस्य । वेद वायोरावासस्थानं विस्तीर्णस्य दर्शनीयस्य महतः । वेद च नक्षत्राणि यानि दिव्यध्यासते ॥ ९ ॥

नि षसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥ १० ॥

नि । ससाद । धृतऽव्रतः । वरुणः । पस्त्यासु । आ । साम्ऽरा-
ज्याय । सुऽक्रतुः ॥ १० ॥

स्कन्दस्वामीयम् ।

निषसाद निषीदति धृतव्रतः वरुणः । [illegible] । पस्त्यासु । पस्त्यमिति गृहनाम । कुर्वीत्वाभिमाय..................लोकपालत्वात् सर्वेषु गृहेषु वा । आकारस्तु पदपूरणः । किमर्थम् । साम्राज्याय सर्वयज्ञसाम्राज्याय । कीदृशः । सुक्रतुः सुकर्मा सुमज्ञो वा ॥ १० ॥

वेङ्कटमाधवीयम् ।

निषसाद[1] । स निषीदति धृतकर्मा वरुणो गृहभूतासु नदीषु साम्राज्यं कुर्वन् सुप्रज्ञः ॥ १० ॥

इति प्रथमस्य द्वितीये सप्तदशो वर्गः ॥

---

अतो विश्वान्यद्भुता चिकित्वाँ अभि पश्यति ।
कृतानि या च कर्त्वा ॥ ११ ॥

अतः । विश्वानि । अद्भुता । चिकित्वान् । अभि । पश्यति ।
कृतानि । या । च । कर्त्वा ॥ ११ ॥

स्कन्दस्वामीयम् ।

अत इति पञ्चमीनिर्देशादागत्येति शेष । अतो द्युलोकादागत्य । अथवा अत इति सप्तम्यर्थे पञ्चमी । अत्र पृथिव्याम् । विश्वानि सर्वाणि अद्भुता महान्ति शुभान्यशुभानि वा कर्माणि । चिकित्वान् ज्ञाता वरुणः लोकपालत्वाद् अभिपश्यति यस्य प्राणिनो यान्यशुभानि शुभानि वा कर्माणि तस्य लोकपालत्वात् प्रत्यवेक्षत इति । कृतानि यानि या च कर्त्वा यानि कर्तव्यानि । य इदं करोति ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अतो विश्वानि । अस्माद् वरुणादेवाश्चर्यकृतानि विश्वान्याश्चर्याणि प्राज्ञोऽभिपश्यति यान्यनेन कृतानि यानि च कर्तव्यानि ॥ ११ ॥

---

1. 'स । नि' प. पाठः.

सनोविश्वाहासुक्रतुरादित्यःसुपथाकरत्।
प्रणआयूंषितारिषत् ॥ १२ ॥

सः। नः। विश्वाहा। सुऽक्रतुः। आदित्यः। सुऽपथा। करत्। प्र। नः। आयूंषि। तारिषत् ॥ १२ ॥

## स्कन्दस्वामीयम्।

(सः) नः अस्मान्। विश्वाहा। निपातोऽयं सर्वेष्वहःस्वित्यस्मिन्नर्थे वर्तते। सर्वदा। सुक्रतुः सुप्रज्ञः सुकर्मा वा आदित्यः। सुपथा करत् करोतिः क्रियासामान्यवचनः सामर्थ्यादत्र नयने वर्तते। शोभनेन पथा नयतु, सर्वदाभिमेतेषु तं तं पन्थानमुपदिशतु, येन प्रवृत्ता वयमभिप्रेतानि प्राप्नुम इत्यर्थः। किञ्च, प्रण आयूंषि तारिषत्। प्रपूर्वस्तरतिर्वर्धने। वर्धयतु नः अस्माकमायूंषि ॥ १२ ॥

## वेङ्कटमाधवीयम्।

स नो विश्वाहा। सोऽस्मान् सर्वदा सुक्रतुरादित्यः शोभनेन पथा (कृ?यु) नोऽस्माकमायूंषि च प्रतारयतु ॥ १२ ॥

बिभ्रद्द्रापिंहिरण्ययंवरुणोवस्तनिर्णिजम्।
परिस्पशोनिषेदिरे ॥ १३ ॥

बिभ्रत्। द्रापिम्। हिरण्ययम्। वरुणः। वस्त। निःऽनिजम्। परि। स्पशः। नि। सेदिरे ॥ १३ ॥

## स्कन्दस्वामीयम्।

बिभ्रद् उदयोत्तरकालं धारयन्। द्रापिं हिरण्ययं कवचं हिरण्मयं वरुणो वस्त। 'वस आच्छादने'। महता तेजसा आच्छादयति। निर्णिजम्। निर्णिगिति रूपनाम। आत्मीयं रूपमिति। तेजस्वित्वाद्ध्यादित्यस्य रूपं नोपलभ्यते। स्पशश्च तदीयास्त्वपरा रश्म्यास्त्याः परिनिषेदिरे कृताकृतप्रत्यवेक्षणार्थं प्राणिनां

सर्वतो निषीदन्ति। अथवा निर्णिगिति घटादिद्रव्यरूपमभिप्रेतम्। उदयोत्तरकालमावद्धहिरण्मयकवचो वरुणः रश्मिभिराच्छादयति घटादिद्रव्यगतं रूपम्। रश्मिभिस्तमोऽपनीय यावत् किञ्चिद् रूपं तत् सर्वं प्रकाशयतीत्यर्थः। तत्सहचरिताश्च देवानां स्पशः प्राणिनां प्रत्यवेक्षार्थं सर्वतो निषीदन्तीति पुराणेषु प्रसिद्धम्—

"आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥"

इति॥ १३॥

वेङ्कटमाधवीयम्।

बिभ्रद् द्रापिम्। बिभ्रत् कवचं हिरण्मयं वरुण आच्छादयति रूपं दीप्तम्। परितश्चैनं निषीदन्ति ज्ञापका रश्मयः॥ १३॥

नयंदिप्सन्तिदिप्सवोनद्रुह्वाणोजनानाम्।
नदेवमभिमातयः॥ १४॥

न। यम्। दिप्सन्ति। दिप्सवः। न। द्रुह्वाणः। जनानाम्।
न। देवम्। अभिऽमातयः॥ १४॥

स्कन्दस्वामीयम्।

न यं दिप्सन्ति। (दिम्ना[1] दम्नो)तिर्वधकर्मा। जिघांसन्ति। दिप्सवः जिघांसकाः असुराः। न[2] द्रुह्वाणः द्रोग्धारः। कस्य। जनानां मनुष्याणाम्। न यमात्मीया हिंसका असुराः, नापि मनुष्याणां हिंसकाश्चोरादयो हिंसन्तीत्यर्थः। नापि[3] यं देवमभिमातयः। अभिमातिशब्दोऽत्र हिंसावचनः। 'ते हिप्मावनुपो नरोऽभिमातिं कयस्यचित्' इति यथा। असुरैश्चोरादिभिः प्रयुज्यमाना हिंसाः॥ १४॥

वेङ्कटमाधवीयम्।

न यं दिप्सन्ति। यं वरुणं हिंसार्थिनो न हिंसितुमिच्छन्ति। जनानामन्येषां द्रोग्धारश्च यस्मै न द्रुह्यन्ति। न च चाभिमन्यन्तेऽभिमातयश्च। उत्तरया सम्बन्धः॥१४॥

---

1. 'प्रमनात्मरूपम्। उ' ग. पाठः. 2. 'न्ति। कतमे याने पौराणिका रहस्यसाक्षिण आहुः। आ' क. ख. पाठः. 3. 'नापि द्रु' ख. पाठः.

उतयोमानुषेष्वायशश्चक्रेअसाम्या ।
अस्माकमुदरेष्वा ॥ १५ ॥

उत । यः । मानुषेषु । आ । यशः । चक्रे । असामि । आ । अस्माकम् । उदरेषु । आ ॥ १५ ॥

## स्कन्दस्वामीयम् ।

उत यः अपिच वरुणः मानुषेषु । आकारोऽत्र चशब्दस्यार्थे । 'देवेभ्यश्च पितृभ्य आ' इति यथा । तच्छ्रुतेश्च योग्यद्वितीयसमुच्चयाध्याहारः । मनुष्येषु देवेषु च । यशः अन्नं चक्रे । रश्मिभी रसानाहरन् प्रतिददच्च करोति । कीदृशम् । असामि । सामिशब्दोऽर्धवचनः । अनर्धं सकलं प्रभूतमित्यर्थः । आकारस्तु पदपूरणो वा, चक्र इत्येतेन वा सम्बन्धयितव्यः । अभिमुखेन करोतीति । नच केवलेषु मानुषेषु देवेषु च, अस्माकमुदरेष्वा । अयमप्याकारश्चशब्दस्यार्थे अस्माकमित्येतस्माच्च परो द्रष्टव्यः । अस्माकं च मनुष्याणां तिर्यक्सदृशानामुदरेषु । यच्छब्दश्रुतेस्तच्छब्दाध्या(हृ)त्योत्तरैकवाक्यता । तम् ॥ १५ ॥

## वेङ्कटमाधवीयम् ।

उत यः । अपिच यो मनुष्येष्वन्नमसाधारणं चक्रे, सोऽस्माकमुदरेष्वाकरोतु । प्रथम आकारः समुच्चयार्थं स्फुटीकरोति ॥ १५ ॥

इति प्रथमस्य द्वितीयेऽष्टादशो वर्गः ॥

---

परामेयन्तिधीतयोगावोनगव्यूतीरनु ।
इच्छन्तीरुरुचक्षसम् ॥ १६ ॥

परा । मे । यन्ति । धीतयः । गावः । न । गव्यूतीः । अनु । इच्छन्तीः । उरुऽचक्षसम् ॥ १६ ॥

स्कन्दस्वामीयम्।

परा मे यन्ति परागच्छन्ति प्राप्नुवन्ति मे मम धीतय प्रज्ञा कर्माणि वा स्तुत्याख्यानि । मदीया बुद्धय यो वेत्यर्थ । कथ परायन्ति । गावो न गव्यूतीरनु । गावो यत्र चरन्ति स भूप्रदेशो गव्यूतिरित्युच्यते । अनुशब्द प्रतिशब्दस्यार्थे । गाव इव गव्यूतिं प्रति । इच्छन्तीरुरुचक्षसम् । इच्छन्ती । किम् । सामर्थ्यादायु । कीदृश त्वाम् । उच्यते । उरुचक्षसम् । बहूना द्रष्टार बहुदर्शन वा ॥ १६ ॥

वेङ्कटमाधवीयम्।

परा मे । परागच्छन्ति मे बुद्धयो वरुण राजान प्रति यथा गावो गोमार्गान् प्रति गच्छन्तीरुरु त्वो बहूनां द्रष्टार द्रष्टुम् । १६ ॥

संनुवोचावहैपुनर्यतोमेमध्वाभृतम् ।

होतेवक्षदसेप्रियम् ॥ १७ ॥

सम् । नु । वोचावहै । पुनः । यतः । मे । मधु । आऽभृतम् ।

होताऽइव । क्षदसे । प्रियम् ॥ १७ ॥

स्कन्दस्वामीयम्।

नु इति क्षिप्रनाम । क्षिप्रम् । सवोचावहै पुन आवा हरिश्चन्द्रशुन शेपौ पुन सम्भूतौ । किम् । सामर्थ्यान्मुञ्च त्वमावामिति । हरिश्चन्द्र वा त्व चाह च पुन सवोचावहै । मा विमुच्य मया समापस, अहमपि भवन्त मुच्यमान इति हि तदाशास इत्यर्थ । कस्मात् । यतो मे । तादर्थ्ये एषा चतुर्थी । मदर्थम् । येनोपस्तीर्याभिघार्य चाह जु(हु[1]ह्व)पित, तदाज्यलक्षण मधु आभृतमृत्विग्भि । यत आज्य गृहीत्वा मा होतुमृत्विज उपस्थिता इत्यर्थ । यत(.) होतेव क्षदसे । क्षदतिरत्र सामर्थ्याद् विशसनार्थे । यथा होता[3] भिगुमैर्यदानेन, एव त्वमसिनिर्मोक्षणेन विशससि । किम् । प्रियम् । इष्ट मम शरीरम् । अथवा यत इति सप्तम्यर्थे पञ्चमी । यत्र यज्ञे मदर्थं मध्वाभृत, यत्र च त्व होतेव विशससि प्रिय मम शरीर, तत्र क्षिप्र सवोचावहै पुनरिति ॥ १७ ॥

१ ग स्व', २ 'मुञ्चस्व मा स', ३ 'तुर्धि' क ख पाठ
४ पा' ग पाठ ५ 'र स' क ख पाठ

वेङ्कटमाधवीयम् ।

सं नु वोचावहै । त्वं चाहं च वरुणाधुना संवादं पुनः पुनः कुर्वो यतो मे मधुसदृशं स्तोत्रं सम्भृतम् । त्वं च होतेव प्रियं क्षदसे । क्षदिः शकलीभावकर्मा । यथा होता प्रियं वदन् वाचा पशुं शकलीकरोति, एवमिदं तुभ्यं दत्तमिदं तुभ्यं दत्तमिति वदसि ॥ १७ ॥

दर्शं॒ नु वि॒श्वद॑र्शतं॒ दर्शं॒ रथ॒मधि॒ क्षमि॑ ।

ए॒ता जु॑षत मे॒ गिरः॑ ॥ १८ ॥

दर्श॑म् । नु । वि॒श्वऽद॑र्शतम् । दर्श॑म् । रथ॑म् । अधि॑ । क्षमि॑ ।
ए॒ताः । जु॒ष॒त॒ । मे॒ । गिरः॑ ॥ १८ ॥

स्कन्दस्वामीयम् ।

दर्शं नु महता यत्नेन दृष्टवानहं नु प्रियम् । विश्वदर्शतं सर्वस्य दर्शनीयं द्रष्टारं वा वरुणम् । नच केवलम् । किं तर्हि । रथमपि दर्शम् । यत्रायमारूढः । क्व । अधिक्षमि । पृथिव्या उपरि दिवीत्यर्थः । यत एवमतो ब्रवीमि एता जुषत जुषतां सेवतां मे गिरः स्तुतीः ॥ १८ ॥

वेङ्कटमाधवीयम् ।

दर्शं नु । दृष्टवानस्म्यहमिदानीं सर्वस्य दर्शनीयं वरुणं दर्शं चास्य रथं भूमेरुपरि । स मे स्तुतीरेताः सेवताम् ॥ १८ ॥

इ॒मं मे॑ वरुण श्रुधी॒ हव॑म॒द्या च॑ मृळय ।

त्वाम॑व॒स्युरा च॑के ॥ १९ ॥

इ॒मम् । मे॒ । व॒रु॒ण॒ । श्रु॒धि॒ । हव॑म् । अ॒द्य । च॒ । मृ॒ळ॒य॒ ।
त्वाम् । अ॒व॒स्युः । आ । च॒के॒ ॥ १९ ॥

स्कन्दस्वामीयम् ।

इमं मे वरुण! शृणुष्वाह्वानमिदम् । श्रुत्वा च अद्य च । चशब्दादतश्चोर्ध्वम् । मृळय विमुच्य मां सुखय । किं कारणम् । यस्मात् त्वामवस्युः आत्मपालनकामोऽहम् । आचके, कान्तिकर्मायं, कामये पालयेत्यर्थः ॥ १९ ॥

वेङ्कटमाधवीयम् ।

इमं मे । इमं मे वरुण! शृणु हवम् । श्रुत्वा चाद्य मां सुखय । त्वां रक्षणच्छुरहं कामये यद्वाभिगच्छामि ॥ १९ ॥

त्वंविश्वस्यमेधिरदिवश्चग्मश्चराजसि ।

सयामनिप्रतिश्रुधि ॥ २० ॥

त्वम् । विश्वस्य । मेधिर । दिवः । च । ग्मः । च । राजसि ।
सः । यामनि । प्रति । श्रुधि ॥ २० ॥

स्कन्दस्वामीयम् ।

स यामनीति तच्छब्दाद् यच्छब्दोऽध्याहार्यः । यस्त्वं विश्वस्य यावदर्थनीयस्य सर्वस्य । हे मेधिर! यज्ञवन्! । दिवश्च ग्मश्च । ग्मा इति पृथिवीनाम । दिवश्च पृथिव्याश्च । राजसि ईशिषे । सः । यामनि । अधिकरणेऽत्र मनिर्द्रष्टव्यः । मृत्युं प्रति गम्यते यस्मिन् स यामा मरणकालः तत्र । मह्यं प्रतिश्रुधि प्रतिशृणु । किम् । सामर्थ्याद् 'मुञ्चामि त्वा, त्वं न म्रियस' इत्येतत् प्रतिजानीहीत्यर्थः ॥ २० ॥

वेङ्कटमाधवीयम् ।

त्वं विश्वस्य । त्वं विश्वस्य जीवनम् । दिवश्च पृथिव्याश्च राजसि । प्राज्ञ ! स गमनेऽभिलषितमस्माकं प्रतिश्रुधि ॥ २० ॥

उदुत्तमंमुमुग्धिनोविपाशंमध्यमंचृत ।

अवाधमानिजीवसे ॥ २१ ॥

उत् । उत्ऽतमम् । मुमुग्धि । नः । वि । पाशम् । मध्यमम् ।
चृत । अव । अधमानि । जीवसे ॥ २१ ॥

स्कन्दस्वामीयम् ।

उदुत्तमम् उत्तमं तावत् पाशं मुमुग्धि ऊर्ध्वं मुञ्च नः । वि पाशं मध्यमं चृत । चृतिर्हिंसाग्रन्थयोः । मध्यममपि पाशं तत्रैव स्थितं विग्रथय विमुञ्चेत्यर्थः । अधमानपि पाशान् अवचृत अधो मुञ्च । जीवसे जीवयितुं माम् ॥ २१ ॥

वेङ्कटमाधवीयम् ।

उदुत्तमम् । उत्तमस्य पाशस्योन्मोचनं मध्यमस्य विचर्तनमपमोचनमधमानां बन्धनानां जीवनायेति ॥ २१ ॥

इति प्रथमस्य द्वितीये एकोनविंशो वर्गः ॥

---

"तं वरुण उवाचाग्निर्वै देवानां मुखं सुहृदयतमस्तन्नु स्तुयथ त्वोत्स्रक्ष्याम इति । सोऽग्निं तुष्टावात उत्तराभिर्द्वाविंशत्या ।"

वसिष्वाहिमियेध्यवस्त्राण्यूर्जांपते ।

सेमंनोअध्वरंयज ॥ १ ॥

वसिष्व । हि । मियेध्य । वस्त्राणि । ऊर्जाम् । पते । सः । इमम् । नः । अध्वरम् । यज ॥ १ ॥

स्कन्दस्वामीयम् ।

वसिष्वाहि मियेध्येत्याग्नेये । 'वसिष्वाही'त्येते द्वे सूक्ते अग्निदेवते । वसिष्व । 'वस आच्छादने' । आच्छादय परिधत्स्वेत्यर्थः । हिशब्दः पदपूरणः । हे मियेध्य ! यज्ञार्ह ! । किम् । वस्त्राणि समायोग्यानि अन्यानि वासांसि । ऊर्जां पते ! हविर्लक्षणानामन्नानां स्वामिन् ! परिधाय सेमं नो अध्वरं यजेति व्याख्यातः पादः ॥ १ ॥

वेङ्कटमाधवीयम् ।

वसिष्व । आच्छादय यज्ञिय ! ऊर्जाम् अन्नानां पते ! । अथास्माकं यज्ञमिमं यज ॥ १ ॥

निनोहोतावरेण्यःसदायविष्ठमन्मभिः ।

अग्नेदिवित्मतावचः ॥ २ ॥

नि । नः । होता । वरेण्यः । सदा । यविष्ठ । मन्मऽभिः । अग्ने । दिवित्मता । वचः ॥ २ ॥

---

१. 'नि या' ख. पाठः.

स्कन्दस्वामीयम्।

नि इत्युपसर्गश्रुतेर्योग्यक्रियापदाध्याहार । निषीद। न अस्माक होता वरेण्य वरणीय सदा यविष्ठ युवतम । अग्निर्हि जीर्णोऽपीन्धन प्राप्य पुनस्तरुणीभवति। अतो युवतम। मन्मभि यानि तवातिशयवन्ति ज्ञानानि तै। हे अग्ने! दिवित्मता दीप्तिमता च वचसा युक्त ॥ २ ॥

वेङ्कटमाधवीयम्।

नि नो होता। निकामयास्मान् होता वरणीय सदा युवतम पूजनीयैं स्तुतिभिरग्ने दीप्तिमता स्तोत्रेण ॥ २ ॥

कस्मात्। उच्यते —

आहिष्मासूनवेपितापिर्यजत्यापये।

सखासख्येवरेण्यः ॥ ३ ॥

आ। हि। स्म। सूनवे। पिता। आपिः। यजति। आपये।

सखा। सख्ये। वरेण्यः ॥ ३ ॥

स्कन्दस्वामीयम्।

आङ् मर्यादायाम्। हिशब्दो यस्मादर्थे। स्मशब्द पदपूरण। यस्मान्मर्यादया सूनवे पुत्रार्थं पिता आपिर्ज्ञातिश्च होता विपद्य यजति। आपये ज्ञातये सखा च सख्ये वरेण्य वरणीय। त्व चास्माक पित्रादिरूप इत्यर्थ ॥ ३ ॥

वेङ्कटमाधवीयम्।

आहिष्मा। कश्चिदग्ने स्तोता पुत्रस्थाने भवति। तस्मा अग्ने पिता भूत्वा यजति। ज्ञातिर्ज्ञातये मित्राय मित्र वरणीय। हिशब्दो विस्मये ॥ ३ ॥

मित्रश्च यजति त्वयि —

आनोबर्हीरिशादसोवरुणोमित्रोअर्यमा।

सीदन्तुमनुषोयथा ॥ ४ ॥

आ। नः। बर्हिः। रिशादसः। वरुणः। मित्रः। अर्यमा।

सीदन्तु। मनुषः। यथा ॥ ४ ॥

स्कन्दस्वामीयम् ।

आ इत्युपसर्गः सीदन्त्वित्याख्याते सम्बन्धयितव्यः । नः अस्माकं स्वभूतं बर्हिः । रिशादसः हिंसतां क्षेप्तारः प्रतिहिंसितार इत्यर्थः । वरुणो मित्रः अर्यमा च आसीदन्तु । वरुणादयश्चात्र देवमात्रोपलक्षणार्थाः, सर्वे देवा आसीदन्त्वित्यर्थः । मनुषो यथा मनुष्या इव ॥ ४ ॥

वेङ्कटमाधवीयम् ।

आ नो बर्हिः । आसीदन्तु बर्हिरस्माकमिमे देवा मनोरिव प्रजापते रिशतामसितारः ॥ ४ ॥

पूर्व्यहोतरस्यनोमन्दस्वसख्यस्यच ।
इमाउषुश्रुधीगिरः ॥ ५ ॥

पूर्व्य । होतः । अस्य । नः । मन्दस्व । सख्यस्य । च । इमाः । ऊम् इति । सु । श्रुधि । गिरः ॥ ५ ॥

स्कन्दस्वामीयम् ।

पूर्व एव पूर्व्यः । यकार उपजनः । हे पूर्व्य! चिरन्तन! होतः! अस्य नः मन्दस्व सख्यस्य च । सख्यस्येति द्वितीयार्थे षष्ठी । सख्यं च —

"देवैः सह मनुष्याणां स्तुत्यस्तोतृत्वलक्षणम् ।"

इदं सख्यं च नः । उ सु इति पदपूरणौ । श्रुधि गिरः । शुनश्शेपो देवानां स्तोतेत्येतच्च प्रकाशय, इमाश्च स्तुतीः शृण्वित्यर्थः । अथवास्य सख्यस्येति सप्तम्यर्थे षष्ठी । मन्दतिरपि मोदनार्थः । 'मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु' इति । अस्मिंश्च सख्ये मोदस्व, इमाश्च शृणु स्तुतीरित्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

पूर्व्य होतः । पूर्वेषु भव! होतरस्माकमि(मं[1]? दं) सख्यमनुमोदस्व । स्तुतीरिमाः सुष्ठु शृणु ॥ ५ ॥

इति प्रथमस्य द्वितीये विंशो वर्गः ॥

---

१. 'रिमं' म. पाठः.

यच्चिद्धिशश्वतातनादेवंदेवंयजामहे ।
त्वेइद्धूयतेहविः ॥ ६ ॥

यत् । चित् । हि । शश्वता । तना । देवम्ऽदेवम् । यजामहे ।
त्वे इति । इत् । हूयते । हविः ॥ ६ ॥

स्कन्दस्वामीयम् ।

यच्चित् यद्यपि । हीति पदपूरण । शश्वता तना । शश्वदिति बहुनाम । बहुना हविर्लक्षणेन धनेन । देव देव यजामहे । यद्यपीति वचनात् तथापीत्यध्याहार्यम् । तथापि त्वे इत् । इच्छब्द एवार्थे । त्वय्येव । हूयते सर्वं तद्धविर्नान्यत्र क्वचित् ॥ ६ ॥

वेङ्कटमाधवीयम् ।

यच्चिद्धि । यदि हि वय बहुला धनेन सर्वान् देवान् यजामहे त्वय्येव तेभ्योऽपि हूयते हवि ॥ ६ ॥

प्रियोनोअस्तुविश्पतिर्होतामन्द्रोवरेण्यः ।
प्रियाःस्वग्नयोवयम् ॥ ७ ॥

प्रियः । नः । अस्तु । विश्पतिः । होता । मन्द्रः । वरेण्यः ।
प्रियाः । सुऽअग्नयः । वयम् ॥ ७ ॥

स्कन्दस्वामीयम् ।

प्रियो न तथोपकरोतु यथास्माक प्रियो भवतीत्यर्थ । विशो मनुष्यास्तेषा पतिरग्नि । होता मन्द्र । मन्दतेरर्चतिकर्मण एतद्रूपम् । स्तुत्य स्तोता वा । वरेण्य वरणीय । प्रिया स्याम स्वग्नय शोभनैराहवनीयादिभिर्युक्ता वयम् ॥ ७ ॥

वेङ्कटमाधवीयम् ।

प्रियो न । प्रियो नो अस्तु विश्पतिर्होता माद्यिता वरणीय । वय चास्मै स्वग्नय प्रिया स्याम ॥ ७ ॥

---

१. 'न्यो इति पि भृत्ये ह' ग पाठ

स्वग्नयो॑ हि॒ वार्यं॑ दे॒वासो॑ दधि॒रे च॑ नः ।

स्वग्नयो॑ मनामहे ॥ ८ ॥

सु॒ऽअ॒ग्नयः॑ । हि । वार्य॑म् । दे॒वासः॑ । द॒धि॒रे । च॒ । नः॒ । सु॒ऽअ॒ग्नयः॑ । म॒ना॒म॒हे॒ ॥ ८ ॥

स्कन्दस्वामीयम् ।

स्वग्नयो हि । हिशब्दोऽत्र पदपूरणः । शोभनाहवनीयादिभिर्युक्ताः । वार्यं वरणीयम् । किं तत् । सामर्थ्यादग्नेः स्तोत्रम् । देवासो दधिरे च । देवशब्दोऽत्र हविर्दानाद्दृत्विक्षु वर्तते । चशब्दश्चासात् परो द्रष्टव्यः । देवाश्च । दधिरे ऋत्विजश्च विश्वामित्रादयो धारयन्ति कुर्वन्ति । नः अस्माकं सम्बन्धिनः । वयं च तैराहवनीयादिभिः स्वग्नयो मनामहे । मन्यतेरर्चतिकर्मण एतद् रूपम् । स्तुमः । अथवा हिशब्दो यस्मादर्थे । वार्यमिति सोमलक्षणहविर्वचनः । दधिरे चेति चशब्दाद् योग्यद्वितीयसमुच्चयाध्याहारः । मनामह इत्यपि याच्ञा । एवमेकवाक्यता —यस्मात् स्वग्नय ऋत्विजो मत्तो वरणीयतरं सोमलक्षणं हविर्धारयन्ति, दास्यन्ति चाग्नये, तस्मात् स्वग्नयो वयं याचामहे । किम् । सामर्थ्यादात्मविमोक्षम् ॥ ८ ॥

वेङ्कटमाधवीयम् ।

स्वग्नयो हि । स्वग्नयो हि वरणीयं धनमस्मभ्यं देवा धारयन्ति । अतो वयं स्वग्नयो हविर्वहनायाग्निं स्तुमः ॥ ८ ॥

अथा॑ न उ॒भये॑षा॒ममृ॑त॒ मर्त्या॑नाम् ।

मि॒थः स॑न्तु॒ प्रश॑स्तयः ॥ ९ ॥

अथ॑ । नः॒ । उ॒भये॑षाम् । अमृ॑त । मर्त्या॑नाम् । मि॒थः । स॒न्तु॒ । प्रऽश॑स्तयः ॥ ९ ॥

स्कन्दस्वामीयम् ।

अथ विमोक्षानन्तरम् । (नः ।) 'त्यदादीनि सर्वैर्नित्यम्' (१-२-७२) इत्येवमयमस्मदो युष्मच्छब्देन । तव चास्माकं च उभयेषाम् । अमृत ! मरण-

१. 'या' क. ख. पाठः.

वर्जित ! अग्ने ! मर्त्यानां मनुष्याकाराणाम् । शुनश्शेपो हि मनुष्यत्वादेव तदाकारः । अग्निस्तु पुरुषविधत्वात् । मिथः परस्परं, सन्तु प्रशस्तयः । प्रशंसे त्वमस्मान् नेदृशा अन्ये स्तोतार इति । वयमपि प्रशंसामः नेदृशोऽन्यो देव इति । अथवा मिथःशब्दः सहत्ववचनः । तवास्माकं च सह सन्तु प्रशस्तयः। नहि स्तुत्यस्य स्तोत्रा विना प्रशंसास्ति, न स्तोतुः स्तुत्येन । तत्र तव स्तुत्यस्य सहास्माकं च स्तोतृणां त्वयैव सह प्रशंसास्तु, मान्येन केनचिदित्याशास्महे ॥ ९ ॥

वेङ्कटमाधवीयम् ।

अथान्तः । अमृताग्ने ! तव चास्माकं च मर्त्यानामुभयेषां परस्परं प्रशस्तयः सन्तु । सुष्टुतमिति त्वं ब्रूहि, सुदत्तमिति वयमिति ॥ ९ ॥

विश्वेभिरग्नेअग्निभिरिमंयज्ञमिदंवचः ।

चनोधाःसहसोयहो ॥ १० ॥

विश्वेभिः । अग्ने । अग्निऽभिः । इमम् । यज्ञम् । इदम् । वचः ।

चनः । धाः । सहसः । यहो इति ॥ १० ॥

स्कन्दस्वामीयम् ।

विश्वेभिः हे अग्ने ! आत्मनो भ्रातृभिरग्निभिः सह । इमं यज्ञमिदं वचः स्तुतिलक्षणम् । चनः । चन इत्यन्ननाम । अन्नं चरुपुरोडाशादिलक्षणम् । धाः, यत् त्वं सामर्थ्याद् यत्र स्थापयितव्यं तावद् देवेषु स्थापय, स्तुतिं स्वकरणे, चनोऽपि स्वोदरे । मां तु मुञ्चेत्यर्थः । हे सहसो यहो ! बलस्य पुत्र ! । बलेन मथ्यमानाभ्यामरणीभ्यामग्निर्जायत इति बलस्य पुत्र उच्यते ॥ १० ॥

वेङ्कटमाधवीयम् ।

विश्वेभिरग्ने । सर्वैः सहायभूतैरग्निभिरग्नेऽस्माकं यज्ञमिममिदं च स्तोत्रमन्नं धारमर्थं कुरु बलस्य पुत्र! ॥ १० ॥

इति प्रथमस्य द्वितीये एकविंशो वर्गः ॥

---

१ 'सः त्वमस्मत्प्रशंसनेन ने' क. ख. पाठः. २. 'धाः स्थापय । स्थापयितव्येषु यज्ञ देवेषु, स्तु' ग. पाठः.

अश्वंनत्वावारवन्तंवन्दध्याअग्निंनमोभिः।

सम्राजन्तमध्वराणाम् ॥ १ ॥

अश्वम्। न। त्वा। वारंऽवन्तम्। वन्दध्यै। अग्निम्। नमः-ऽभिः। सम्ऽराजन्तम्। अध्वराणाम् ॥ १ ॥

स्कन्दस्वामीयम्।

अश्वं वारवन्तमिति समानाधिकरणे एते। वारवन्तमिति वालशब्दस्य कपिलकादित्वाद् रत्वम्। अश्वं न वालवन्तं वालवान् योऽश्वस्तमिव। त्वां वन्दध्यै। तुमर्थेऽध्यमध्यैप्रत्ययः। वन्दितुमिच्छामः। प्रारभामह इति वाक्यशेषः। कम्। अग्निम्। नमोभिर्नमस्कारैः स्तुतिभिः। कीदृशम्। सम्राजन्तम्। राजतिरैश्वर्यकर्मा। सम्यगीशानम्। अध्वराणां यज्ञानाम्। अथवा राजतिर्दीप्त्यर्थः। सम्यग् दीप्यमानम्। सप्तम्यर्थे चात्र षष्ठी। षष्ठीश्रुतेर्वा मध्ये इति वाक्यशेषः॥ १ ॥

वेङ्कटमाधवीयम्।

अश्वं न त्वा। अश्वमिव त्वा वालवन्तं नमस्कारैर्वन्दितुमीशानं यज्ञानामुपक्रम इति॥ १॥

सघानःसूनुःशवसापृथुप्रगामासुशेवः।

मीढ्वाँअस्माकंबभूयात् ॥ २ ॥

सः। घ। नः। सूनुः। शवसा। पृथुऽप्रगामा। सुऽशेवः। मीढ्वान्। अस्माकम्। बभूयात् ॥ २ ॥

स्कन्दस्वामीयम्।

घ इति पदपूरणः। सः प्रकृतोऽग्निः। नः सूनुः। 'अस्मदो द्वयोश्च' (१-२-५९) इत्येवमेतद् द्वयोर्बहुवचनम्। आवयोर्हरिश्चन्द्रशुनश्शेपयोः पुत्रः। अरणीमन्थनेन जनितत्वात्। यद्यपि यजमानत्वाद्धरिश्चन्द्रेणैवाग्निर्जनितः नोभाभ्यां, तथापि निमित्तत्वसामान्याद्वा उभौ प्रति पुत्रव्यपदेशः। शवसा पृथु-

१, २. 'स' क. ख. पाठः. ३. 'च्चे अश्वोपमानाभिप्रायः पर्यैप्यः॥' प. पाठः.

प्रगामा स्वेन तेजसाय निस्तीर्णगामी । अथवा पूर्वेण सम्बध्यते । बलेन हेतुना पुत्र इति । यस्माद् बलेनारणिं मथित्वा जात इत्यर्थ । सुशेव सुसुखः । मीढ्वान् धनवान् । सेक्ता वा, हविर्नयनद्वारेण वृष्टिमदत्वात् । अस्माक वभूयात् । अत्यर्थं बलेन भूयादित्याशास्महे । क । सामर्थ्याद् मोक्ता । अथवा सुशेव इत्येतेन सम्बध्यते । सुशेवोऽस्माक भूयात् । अथवा सूनुरित्येतेन सम्बध्यते । अस्माक पुत्रो भूयादित्याशास्महे । जनयित्वा त्वा यष्टुमाशास्मह इत्यर्थ । अत्र चास्माकमित्येतत् सुशेव इत्येतेन सम्बध्यते । योऽस्माक सुसुखो विमोक्तृत्वात्, स न. सूनुर्भूयादिति ॥ २ ॥

वेङ्कटमाधवीयम् ।

सयान । स एवत्वस्मात बलेन स्तूयमानो विस्तीर्णगमन सुसुख कामाना सेक्तास्मत भवतु ॥ २ ॥

सनो॑ दू॒राच्चा॒साच्च॒ नि मर्त्या॑दघा॒योः ।
पा॒हि सद॒मिद्वि॒श्वायुः॑ ॥ ३ ॥

सः । नः॒ । दू॒रात् । च॒ । आ॒सात् । च॒ । नि । मर्त्या॑त् । अ॒घ॒ऽयोः । पा॒हि । सद॑म् । इत् । वि॒श्वऽआ॑युः ॥ ३ ॥

स्कन्दस्वामीयम् ।

य उक्तगुणोऽसि स न अस्माक दूराच्चासाच्च । आसादित्यन्तिकनाम । ता(दय ॰ त्,एध्याक्षोभयत्र ताच्छब्द्यम्, मञ्चा क्रोशन्तीति यथा । दूरस्थादन्तिकस्थाच्च । मर्त्यादघायो पापकामात् । निपाहि नियमेन रक्ष । सदम् । सदाशब्दपर्यायोऽयम् । इच्छब्द पदपूरण , एवार्थे वा । सदैव । विश्वायु॰ । आयु शब्द ए गत्यर्थोऽन्ननाम वा, सर्वगामी सर्वान्नो वा ॥ ३ ॥

वेङ्कटमाधवीयम् ।

स नो दूरात् । सोऽस्मान् दूरादन्तिकाच्च पापमिच्छतो मर्त्यात् सदैव निपाहि सर्वपामभिगन्ता ॥ ३ ॥

इ॒मम् ऊ॒ षु त्वम॒स्माकं॑ स॒निं गा॑य॒त्रं नव्यां॑सम् ।
अग्ने॑ दे॒वेषु॒ प्र वो॑चः ॥ ४ ॥

इमम् । ऊम् इति । सु । त्वम् । अस्माकम् । सनिम् । गायत्रम् । नव्यांसम् । अग्ने । देवेषु । प्र । वोचः ॥ ४ ॥

## स्कन्दस्वामीयम् ।

इममूषु । ऊ सु इति पदपूरणौ । इमं त्वमस्माकम् । सनिम् । 'षणु दाने' । भक्त्यतिरिक्तसोमादिहविर्दानम् । गायत्रम् । गायतिरर्चतिकर्मा । स्तोत्रं च । नव्यांसं नवतरम्, अन्यैः स्तोतृभिरकृतपूर्वम् । हे अग्ने ! देवेषु प्रवोचः । देवेभ्यः प्रकर्षेणाचक्ष्व । मां मुञ्चेत्यर्थः ॥ ४ ॥

### वेङ्कटमाधवीयम् ।

इममूषु । अस्माकमिदं हविषो दानं गायत्रं च स्तोत्रं नवतरमग्ने! देवेषु ब्रूहि ॥ ४ ॥

**आनोभजपरमेष्वावाजेषुमध्यमेषु ।**
**शिक्षावस्वोअन्तमस्य ॥ ५ ॥**

आ । नः । भज । परमेषु । आ । वाजेषु । मध्यमेषु । शिक्ष । वस्वः । अन्तमस्य ॥ ५ ॥

## स्कन्दस्वामीयम् ।

आ भज सेवस्व नः अस्मान् । (परमेषु ।) 'यस्य च भावेन भावलक्षणम्' (२-३-३७) इत्येवमियं सप्तमी । तच्छ्रुतिसामर्थ्याद् यो(ग ? य)लक्षणभूतः क्रियाध्याहारः । परमेषूपकल्पितेषु । न केवलेषु, किं (तर्हि), आवाजेषु । हविर्लक्षणेष्वन्नेषु । मध्यमेष्वपि । अथवा न इति षष्ठी । परमेष्वित्यादिषु द्वितीयार्थे सप्तमी । आभजस्वास्माकं स्वभूतानि हविर्लक्षणान्यन्नानि मध्यमानि च, मां तु मुञ्चेत्यर्थः । किञ्च शिक्ष । 'शिक्ष दाने' । देहि । वस्वो अन्तमस्य । अन्तमशब्दोऽन्तिकनाम । द्वितीयार्थे चेयमत्र षष्ठी । धनं सन्निकृष्टतमम् अत्यन्तोत्कृष्टमित्यर्थः । तद्धि देवानां सन्निकृष्टतमं भवति नान्यत् ॥ ५ ॥

---

१. 'मं यज्ञं वा वा' क. ख. पाठः.

वेङ्कटमाधवीयम् ।

आ नो भज । प्रापयास्मान् दूरस्थेष्वनेष्वाभज च मध्यमेषु । तथा प्रयच्छाग्निउक्तम धनमिति ॥ ५ ॥

इति प्रथमस्य द्वितीये द्वाविंशो वर्गः ॥

विभक्तासिचित्रभानोसिन्धोरूर्मोउपाकआ ।

सद्योदाशुषेक्षरसि ॥ ६ ॥

विऽभक्ता । असि । चित्रभानो इति चित्रऽभानो । सिन्धोः ।
ऊर्मौ । उपाके । आ । सद्यः । दाशुषे । क्षरसि ॥ ६ ॥

स्कन्दस्वामीयम् ।

विभक्ता त्वमसि । हे चित्रभानो ! । भानुर्दीप्तिः । विचित्रदीप्ते ! पूजनीयदीप्ते ! वासि । कस्य । सिन्धोरूर्मौ । सिन्धुरत्र स्यन्दनात् सोमोऽभिप्रेतः । ऊर्मावित्यपि षष्ठ्यर्थे सप्तमी । सोमस्योर्मेः । उपाके । अत्यन्तसनामैतत् । सन्निकृष्टे । कस्मिन् । सामर्थ्याद् यागकाले प्राप्ते । त्वं देवानां सोमस्य विभक्तेत्यर्थः । अथवा उपाके इत्येतदूर्मावित्येतेन समानाधिकरणम् । तात्स्थ्यात् ताच्छब्द्येनास्मान्तिकस्थस्य सोमोर्मेर्विभक्तेत्यर्थः । आकारस्तु पदपूरणो वा मर्यादार्थो वा । विभक्तेत्येतेन सम्बन्धयितव्यः । मर्यादया विभक्तेति । विभज्य च सद्यः समानेऽहनि तस्मिन्नेव दाशुषे क्षरसि । सम्प्रदाने चतुर्थीश्रुतेः क्षरतिरत्र दानार्थः । यजमानाय ददासि, यद् दातव्यं धनं वा आयुर्वा ॥ ६ ॥

वेङ्कटमाधवीयम् ।

विभक्तासि । दाता भवसि चित्रदीप्ते ! स्यन्दमानस्य शोधनस्य सहेऽन्तिककर्मे सति सद्य एव त्वं यजमानाय क्षरसि ॥ ६ ॥

यमग्नेपृत्सुमर्त्यमवावाजेषुयंजुनाः ।

सयन्ताशश्वतीरिषः ॥ ७ ॥

यम् । अग्ने । पृत्ऽसु । मर्त्यम् । अवाः । वाजेषु । यम् । जुनाः ।
सः । यन्ता । शश्वतीः । इषः ॥ ७ ॥

---

१ 'नि' ख पाठः.

स्कन्दस्वामीयम् ।

यं हे अग्ने! पृत्सु सङ्ग्रामेषु मर्त्यम् (अवाः) पालयसि त्वम् । वाजेषु अन्नेषु च हविर्लक्षणेषु निमित्तभूतेषु यं जुनाः, 'जुन गतौ', गच्छसि । यं च मति हवींषि भक्षयितुं गच्छसीत्यर्थः । अथवा वाजेष्विति तृतीयार्थे सप्तमी । जुना इत्यपि जूनातिः सामर्थ्यात् प्रीणनार्थः । अन्नैश्च यं प्रीणयसीत्यर्थः । स यन्ता । यच्छतिर्दानार्थः । प्रयन्ता । अन्येभ्यो दातेत्यर्थः । अथवा 'यमु बन्धने' । आत्मनि नियन्ता लब्धेत्यर्थः । किम् । शश्वतीर्ध्रुवाः, अनपायिनीः । अथवा शश्वदिति बहुनाम । बह्वीः । काः । इषः अन्नानि ॥ ७ ॥

वेङ्कटमाधवीयम् ।

यमग्ने । यं त्वमग्ने! सङ्ग्रामेषु मर्त्यं रक्षसि यं वा तत्र प्रहिणोषि, स हि यच्छति बहून्यन्नानि ॥ ७ ॥

नकिरस्यसहन्त्यपर्येताकयस्यचित् ।

वाजोअस्तिश्रवाय्यः ॥ ८ ॥

नकिः । अस्य । सहन्त्य । परिऽएता । कयस्य । चित् । वाजः । अस्ति । श्रवाय्यः ॥ ८ ॥

स्कन्दस्वामीयम् ।

किञ्च, नकिरस्य । नकिरिति निपातो नेत्यस्यार्थे । अस्येत्यनुदात्तत्वात् पूर्वस्याम् ऋच्यादिष्टस्य मर्त्यस्यान्वादेशः । नचास्य मर्त्यस्य । हे सहन्त्य! अभिभवितः! सहस्वन्! । पर्येता परिगन्ता प्राप्ता । कः । सामर्थ्यादनिष्टः । नैनं कश्चिदनिष्टः प्राप्नोतीत्यर्थः । अथवा पर्येतेति परिपूर्व एतिः सामर्थ्यादत्र वधार्थः । न चास्य कश्चिद्धन्तेत्यर्थः । कयस्यचित् कस्यचिदपि सर्वस्येत्यर्थः । किञ्च, वाजः अन्नं बलं वास्यास्ति भवति । श्रवाय्यः श्रवणीयं प्रख्यातम् ॥ ८ ॥

वेङ्कटमाधवीयम् ।

नकिरस्य । यं त्वं सङ्ग्रामेषु सहनशील! रक्षस्यहिंसार्थमस्य परितो गन्ता न कश्चिदस्ति । यकार उपजनः । कस्यचिदपि । ससेनमसेन वा न तं कश्चिदभिभवति । श्रवणीयमन्नं च तस्यास्ति शत्रुभ्यो जितम् ॥ ८ ॥

---

१. 'ग्र' क. ग्र. पाठः. २. 'ना क' ख. पाठः.

सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता ।

विप्रेभिरस्तुसनिता ॥ ९ ॥

सः । वाजम् । विश्वऽचर्षणिः । अर्वत्ऽभिः । अस्तु । तरुता ।

विप्रेभिः । अस्तु । सनिता ॥ ९ ॥

स्कन्दस्वामीयम् ।

स भक्तोऽग्नि याज सङ्ग्राम विश्वचर्षणि सर्वस्य द्रष्टा अर्वद्भिर-श्वैरस्तु । तरुता । तरति प्लवनार्थ । प्लवन च गमनम् । प्लवतेर्गत्यर्थत्वात् । अस्मदर्थं गन्तास्तु । सङ्ग्रामे गत्वास्माक नित्य साहाय्य करोत्वित्यर्थ । किञ्च, वाजमिति सप्तम्यर्थे द्वितीया । तात्स्थ्याद्वा ताच्छब्द्य मञ्चा क्रोशन्तीति यथा । तरुतेत्यपि तुर्वतेर्हिंसार्थस्येद रूपम् । सङ्ग्रामे सङ्ग्रामस्थम् अस्मच्छत्रु हिंसितास्तु । किञ्च, विप्रेभि । तृतीयानिर्देशात् स्तूयमान इति वाक्यशेष । मेधाविभिरस्माभि स्तूयमान । अस्तु सनिता सम्भक्ता । कस्य । सामर्थ्याद्वस-स्तुतीनामस्माकमेव च ॥ ९ ॥

वेङ्कटमाधवीयम् ।

स वाजम् । स सङ्ग्राम विश्वस्य द्रष्टाश्वैरस्तु तरुता तारको मेधाविभिरश्वैरस्तु सङ्ग्राम सम्भक्ता ॥ ९ ॥

जरांबोधतद्विविड्ढिविशेविशेयज्ञियाय ।

स्तोमंरुद्रायदृशीकम् ॥ १० ॥

जराऽबोध । तत् । विविड्ढि । विशेऽविशे । यज्ञियाय । स्तोमम् । रुद्राय । दृशीकम् ॥ १० ॥

स्कन्दस्वामीयम् ।

अत्रेतिहासमाचक्षते — अग्नि स्तूयमान. शुनश्शेपमुवाच 'रुद्र स्तुहि, रौद्रा हि पशव' इति । स त प्रत्युवाच 'नाह जानामि रुद्र स्तोतु त्वमेवैन स्तुही'ति । तदेतदनयोच्यते — जराबोधेति । जरा स्तुति जरते स्तुति-

कर्मणः। तां यो बुध्यते बोधयति देवान् होतृत्वाज्जराबोधोऽग्निः। तस्य सम्बोधनं हे जराबोध! । तद् विविड्ढि । विदेः ज्ञानार्थस्येदं रूपम् । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽत्राध्याहर्तव्यः । यन्मामवोचः तत् त्वमेव वेत्सि । अथवा विविड्ढीति 'विष्लृ व्याप्तावि'त्यस्यैतद्रूपम् । अयं च वेष इति कर्मनामसु पाठात्तन्नाम्नां चाख्यातत्वात् कर्मणि च करोत्यर्थस्य सम्भवात् करोत्यर्थोऽपि, न व्याप्त्यर्थ एवेति गम्यते । तत् कुर्वित्यर्थः । किं तत् । उच्यते । विशेविशे यज्ञियाय । (सर्वस्मै?) तादर्थ्ये चतुर्थी । यावान् कश्चिन्मनुष्यो यज्ञार्होऽहं चान्यो वा यज्ञस्य कर्ता, तस्य सर्वस्यार्थाय । स्तोमं रुद्राय रुद्रार्थम् । कीदृशम् । (दृशीकं) दर्शनीयम् । अथवा यज्ञियायेत्येतद् रुद्रायेत्येतेन समानाधिकरणं, न विशेविशे इत्येतेन । विशेविशे इति षष्ठ्यर्थे चतुर्थी । सर्वमनुष्याणां यज्ञार्हाय रुद्राय स्तोममिति । यास्कस्तु रोरूयमाणत्वाद् अग्निरेवात्र रुद्रशब्देनोच्यत इति व्याचष्टे । तत्र जराबोधेति आत्मन एवान्तरात्मन इदं सम्बोधनमिति व्याख्यातव्यम् । स्तुत्या स्तुतेर्वा बोधयि(तारं ? तः !) अन्तरात्मन्! यदुच्यते तद् विविड्ढि । किं तत् । सर्वमनुष्याणां यज्ञियाय स्तोममग्नय इति ॥ १० ॥

वेङ्कटमाधवीयम् ।

जराबोध ! स्तुत्या देवानां बोधयितः ! स्तोतव्यजनानीद्धि मनुष्यस्य यज्ञियाय स्तोमं रुद्राय दर्शनीयम् । अत्र यास्कः — अग्निरपि रुद्र उच्यते । जरा स्तुतिः, जरतेः स्तुतिकर्मणः । तां बोधयिता बोधयितरिति वा । तद् विविड्ढि तत् कुरु मनुष्यस्य मनुष्यस्य यजमानाय स्तोमं रुद्राय दर्शनीयमिति ॥ १० ॥

इति प्रथमस्य द्वितीये त्रयोविंशो वर्गः ॥

---

सनोमहाँअनिमानोधूमकेतुःपुरुश्चन्द्रः ।
धियेवाजायहिन्वतु ॥ ११ ॥

सः । नः । महान् । अनिऽमानः । धूमऽकेतुः । पुरुऽचन्द्रः । धिये । वाजाय । हिन्वतु ॥ ११ ॥

---

१. 'तेऽयर्थः । म', २. 'योगाद्' क. ख. पाठः.

## स्कन्दस्वामीयम् ।

सोऽग्नि न अस्माक महान् । अनिमान अनियत मान यस्य सोऽनिमान । नियतपरिमाणवर्जित । धूमकेतु । केतु॰ पताकोच्यते । धूम पताकास्थानीयो यस्य स धूमकेतु । अथवा केतुरिति प्रज्ञानाम । धूम केतु ज्ञान यस्य स धूमकेतु । धूमेन ज्ञायत इत्यर्थ । पुरुश्चन्द्र । पुर्विति बहुनाम । चन्द्रश्चन्दते कान्तिकर्मण । बहुना कान्ति । धिये प्रज्ञाय, कर्मणे वा यागाख्याय । वाजाय अन्नाय च हिन्वतु । हिन्वति प्रीणनार्थ । प्रीणयतु । अग्निना हि प्रीण्यमाना वय सुख प्रज्ञा यागम् अन्न च प्राप्नुम ॥ ११ ॥

## वेङ्कटमाधवीयम् ।

स नो महान् । सोऽस्मामपरिमाणवर्जितो धूमकेतुर्बहूनां कमनीय कर्मणेऽन्नाय च प्रहिणोतु ॥ ११ ॥

स रेवाँइव विश्पतिर्दैव्यः केतुः शृणोतु नः ।
उक्थैरग्निर्बृहद्भानुः ॥ १२ ॥

सः । रेवान्ऽइव । विश्पतिः । दैव्यः । केतुः । शृणोतु । नः । उक्थैः । अग्निः । बृहत्ऽभानुः ॥ १२ ॥

## स्कन्दस्वामीयम् ।

स रेवान् धनवान् इव विश्पति । विशो मनुष्या तेषामपि पतिर्विश्पति राजा । यथा धनवान् राजा सर्वार्थिनाम्, एवमभिप्रेतानि सम्पादयन् । दैव्य देव (क्रत[1]) । देवेषु वा भवो दैव्य । (ते न[2] केतु) प्रज्ञानेसतत्त्व, कर्ता वा सर्वस्य कर्मण । शृणोतु न । उक्थै । द्वितीयार्थ एषा तृतीया । उक्थानि शस्त्राणि । अग्निर्बृहद्भानु महादीप्ति ॥ १२ ॥

## वेङ्कटमाधवीयम् ।

स रयान् । स धनवानिव मनुष्यराजो देवानां प्रज्ञाभूत[3] शृणोत्वस्माद् क्रियमाणै स्तोत्रैरग्निर्महानेना ॥ १२ ॥

---

१ 'धमाणाम्', २ 'नन ख, 'नप्रज्ञ' ग पाठ   ३ 'ज्ञाभू' ख घ, पाठ,

नमो॑ म॒हद्भ्यो॒ नमो॑ अर्भ॒केभ्यो॒
नमो॒ युव॑भ्यो॒ नम॑ आशि॒नेभ्यः॑ ।
यजा॑म दे॒वान्यदि॑ शक्नवा॑म
मा ज्याय॑सः॒ शंस॒मा वृ॑क्षि देवाः ॥ १३ ॥

नमः॑ । म॒हत्ऽभ्यः॑ । नमः॑ । अ॒र्भ॒केभ्यः॑ । नमः॑ । युव॑ऽभ्यः ।
नमः॑ । आ॒शि॒नेभ्यः॑ । यजा॑म । दे॒वान् । यदि॑ । श॒क्नवा॑म । मा ।
ज्याय॑सः । शंस॑म् । आ । वृ॒क्षि॒ । दे॒वाः॒ ॥ १३ ॥

## स्कन्दस्वामीयम्।

इति प्रार्थितोऽग्निस्तमुवाच 'विश्वान्नु देवान् स्तुही'ति । स तान् नम इत्यृचास्तौत् । देवा इत्यामन्त्रितयोगात् प्रत्यक्षकृतोऽयं मन्त्रः । नमो महद्भ्यः वृद्धेभ्यः युष्मभ्यम् । नमः अर्भकेभ्यः । अल्पनामैतत् । अल्पेभ्यः । बालेभ्य इत्यर्थः । नमो (अब्द्यः । आ? युवभ्यस्तरु)णेभ्यः नम आशिनेभ्यः । पलितानां वा तारुण्यवृद्धत्वलक्षणयोर्वा द्वयोरपि वयसोरासन्नपलितेभ्यो मध्यमवयस्केभ्यो वेत्यर्थः । कुत एतत् । द्वयोरधिकारादस्य च वयसः परिशिष्टत्वात् । किञ्च, यजाम देवान् यदि शक्नवाम । अविगुणयागस्य दुष्करत्वादेवमाह यदि शक्नवामेति । यत एवमतो ब्रवीमि — मा ज्यायसः वृद्धतरस्य दीर्घतरस्य वा आयुषः शंसम् आशंसां प्रार्थनां वा आवृक्षि । वृश्चतेश्छेदनार्थस्येदं रूपम् । मध्यमपुरुषबहुवचनस्य स्थाने इह व्यत्ययेनोत्तमपुरुषैकवचनम् । मा छैत यूयं हे देवाः! । मा मे आयुषः प्रार्थनामपहार्ष्ट, दत्त मे दीर्घमायुरित्यर्थः । अथवा वृक्षीति स्वार्थ एवोत्तमपुरुषः । आ इत्येष तु वर्ज्येत(स्य? स्यार्थ)माह । मात्मनो दीर्घस्यायुषः प्रार्थनां विच्छि(य? दा)सम् । अविच्छेदेन सततमायुः प्रार्थये । भवन्तश्च यथाप्रार्थितमेव मे देयासुरित्यर्थः ॥ १३ ॥

---

१. 'कतमा । नमो महद्भ्य इत्येषा । देवां इत्या' क. ख. पाठः. २. 'तु । नमो' ग. पाठः.

वेङ्कटमाधवीयम् ।

नमो महद्भ्य । नमो महाशरीरेभ्य । नमोऽल्पशरीरेभ्यश्च । नमो युवभ्यो वृद्धेभ्यश्च । शक्तश्चेद् वय देवानेव यजामोऽभ्युदयस्याभिलाषाय । हे देवा ! माहं वृक्षि । वृश्चतिश्छेदनकर्मा । अह निराशो मा भूवमिति ॥ १३ ॥

इति प्रथमस्य द्वितीये चतुर्विंशो वर्ग ॥

---

यत्र॒ ग्रावा॑ पृ॒थुबु॑ध्न ऊ॒र्ध्वो भव॑ति॒ सोत॑वे ।

उ॒लूख॑लसुताना॒मवेद्वि॑न्द्र जल्गुलः ॥ १ ॥

यत्र॑ । ग्रावा॑ । पृ॒थुऽबु॑ध्नः । ऊ॒र्ध्वः । भव॑ति । सोत॑वे । उ॒लूख॑लऽसुतानाम् । अव॑ । इत् । ऊँ॒ इति॑ । इ॒न्द्र॒ । ज॒ल्गु॒लः ॥ १ ॥

स्कन्दस्वामीयम् ।

ऐन्द्रश्चतुर्ऋच पर । इन्द्रदेवत्योऽय चतुर्ऋच नमो महद्भ्य इत्यस्या पर । वियुक्तपाश शुनश्शेप एतेन चतुर्ऋचेन सोम जुहाव । परेणोलूखले मुसलेनाभिसुषाव । अन्यथा द्रोणकलशमभ्यवनिनाय । यथा वियुक्तपाश शुनश्शेपमधिकृत्य ब्राह्मण भवति — "तमृत्विज ऊचु । त्वमेवास्याह्न सस्थामधिगच्छेत्यथहैत शुनश्शेपोऽञ्जस्सव ददर्श । तमेताभिश्चतसृभिरभिसुषाव यच्चिद्धि त्व गृहे गृह इति" । एतासा चर्चामुलूखलमुसलदेवतात्वादुलूखलमुसलेनाभिसुषावेति गम्यते । "अथैन द्रोणकलशमभ्यवनिनायोच्छिष्ट चम्वोर्भरेत्येत-यर्चाथहास्मिन्नन्वारब्धे पूर्वाभिश्चतसृभि सस्वाहाकाराभिर्जुहवाञ्चकारे"ति । यत्र यज्ञे अभिषवग्रावा पृथुबुध्न हस्तेनोद्धूयमाण ऊर्ध्वो भवति सोतवे सोमाभिषवार्थम् । यत्रेति श्रुतेस्तत्रेत्यध्याहार्यम् । तत्रोलूखलसुतानाम् । द्वितीयार्थे षष्ठ्येषा । षष्ठीश्रुतेवैकदेशमिति शेष । उलूखलसुत सोमम्, उलूखलसुतस्य वा सोमस्यैकदेशम् । अव इत् इन्द्र ! जल्गुल । अवेत्युपसर्गो जल्गुल इत्याख्यातेन सम्बन्धयितव्य । जल्गुल इत्येतच्च गिरतेर्यङ्लुगन्तस्येद रूपम् । उ ऊ इति पदपूरणौ । हे इन्द्र ! अवजल्गुल इत्यर्थ । पुन पुनर्वा अवगिर पिबेत्यर्थ । अधिषवणफलकयोरेव सोमोऽभिषूयते, नोलूखले । तत्राभिधानात् तदाकारत्वात् तत्कार्यकरत्वादुलूखलशब्द ॥ १ ॥

---

१ 'उलूखल-सोमाभिषवस्याभिधानादुलूखलशब्दनुम्य सुतानामित्यत्र च यच्चिद्धि त्व गृहे गृह इत्यत्र च तदाकारत्वात्तत्कार्यकरत्वाद्वा अधिषवणफलकयोरधिषवणत्वन् प्राव सुतानामिति व्याख्यानम्यम्' ॥ १ ॥ क ख पाठ ।

वेङ्कटमाधवीयम् ।

यत्र ग्रावा । यस्मिन् यज्ञेऽभिषवग्रावा पृथुमूल आहननप्रकार ऊर्ध्वमुखो भवति सोमाभिषवाय तत्रोलूखलसुतान् सोमानिन्द्र! त्वमवजल्गुकोऽवगिरः पिब इति ॥ १ ॥

यत्र द्वाविव जघनाधिषवण्या कृता ।

उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ २ ॥

यत्र । द्वौऽइव । जघना । अधिऽसवन्या । कृता । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ २ ॥

स्कन्दस्वामीयम् ।

यत्र यज्ञे द्वाविव जघना । यथा मैथुनकाले स्त्रीपुंसजघने एवमभिषवकाले परस्परसम्पर्कौ । अधिषवण्या । प्रथमाद्विवचनस्यायमाजादेशः । अधिषवण्यौ ग्रावाणौ कृता कृतौ तत्र उलूखल(सुताना)मित्याद्युक्तार्थम् ॥ २ ॥

वेङ्कटमाधवीयम् ।

यत्र द्वाविव । जघनावधिषवणफलके विस्तीर्णे अध्वर्युभिः कृते प्रतिमुखे पुरस्तात् समाकर्षे पश्चाद्विधाधिषवणफलकयोः सूत्रमिति ॥ २ ॥

यत्र नार्यपच्यवमुपच्यवं च शिक्षते ।

उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ३ ॥

यत्र । नारी । अपऽच्यवम् । उपऽच्यवम् । च । शिक्षते । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ ३ ॥

स्कन्दस्वामीयम् ।

नारीत्येतल्लुप्तो(पमा) । यत्र यज्ञे मैथुनकाले स्वजघने नारीव पुरुषाय एकोऽभिषवग्रावा इतरस्मै ग्राव्णे अपच्यवमुपच्यवं च । च्यवतिर्गत्यर्थः । अपगमनमुपगमनं च । शिक्षते ददाति । अपगच्छत्युपगच्छति चेत्यर्थः । तत्रोलूखलसुतानामित्याद्युक्तार्थम् ॥ ३ ॥

१. 'यं वादे' क. ख. पाठः.

वेङ्कटमाधवीयम् ।

यत्र नारी । यत्राभिषवप्रभृति प्रावाणं दृष्ट्वा स्त्री भर्तारि प्रवेशकौशलं निर्गमनकौशलं च शिक्षते ॥ ३ ॥

यत्र मन्थां विबध्नते रश्मीन्यमितवा इव ।
उलूखलसुतानामवेद्विन्द्र जल्गुलः ॥ ४ ॥

यत्र । मन्थाम् । विऽबध्नते । रश्मीन् । यमितवैऽइव । उलूखलऽसुतानाम् । अव । इत् । ऊँ इति । इन्द्र । जल्गुलः ॥ ४ ॥

स्कन्दस्वामीयम् ।

यत्र यज्ञे मन्थाम् । अभिषवग्रावाण मन्था उच्यते । सोमस्य मथितृत्वात् । त विबध्नते विबध्नन्त्यङ्गुलीभि । कथम् । रश्मीन् यमितवा इव अश्व रश्मीनिव नियन्तुमश्वान् । अथवा दधिमन्थनरज्जूराह । तृतीयार्थे द्वितीया । यथा दधिमन्थान नियन्तु रज्जुभिर्बध्नीयु तद्वदित्यर्थः । तत उलूखलसुतानामित्याद्युक्तार्थम् ॥ ४ ॥

वेङ्कटमाधवीयम् ।

यत्र मन्थाम् । यस्मिन् यज्ञेऽभिषवाय ग्रावाण धारयन्ति रश्मीनिवाश्वानां नमनाय तत्रोलूखलसुतानामिति ॥ ४ ॥

यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे ।
इह द्युमत्तमं वद जयतामिव दुन्दुभिः ॥ ५ ॥

यत् । चित् । हि । त्वम् । गृहेऽगृहे । उलूखलक । युज्यसे । इह । द्युमत्ऽतमम् । वद । जयताम्ऽइव । दुन्दुभिः ॥ ५ ॥

स्कन्दस्वामीयम् ।

उलूखलस्य द्वे इमे । द्वे एते ऋचौ उलूखलदेवत्ये । यच्चित् यद्यपि । हीति पदपूरण । त्वं गृहे गृहे उलूखलक! युज्यसे व्रीह्याद्यवघातार्थम् । यद्यपीति वचनात् तथापीत्यध्याहार्यम् । तथापि मया शुनःशेपेन सोमाभिषवाय

१ 'यथा' ख. ग पाठः.

नियुक्तं द्युमत्तमं दीप्तिमत्तमं वद शब्दं कुरु । कथम् । जयतामिव राज्ञां दुन्दुभिर्वादित्रम् । सङ्ग्रामे हि ये जयन्ति तेषां दीप्तिमद् दुन्दुभिर्वदति, नेतरेषाम् ॥ ५ ॥

वेङ्कटमाधवीयम् ।

यच्चिद्धि त्वम् । यद्यपि हे त्वमुलूखल ! सर्वेषु गृहेषु युज्यसे, स इहापि दीप्ततमं वद मुसलेनाभिहतो यथा जयतां दुन्दुभिः ॥ ५ ॥

इति प्रथमस्य द्वितीये पञ्चविंशो वर्गः ॥

---

उतस्मतेवनस्पतेवातोविवात्यग्रमित् ।
अथोइन्द्रायपातवेसुनुसोममुलूखल ॥ ६ ॥

उत । स्म । ते । वनस्पते । वातः । वि । वाति । अग्रम् । इत् ।
अथो इति । इन्द्राय । पातवे । सुनु । सोमम् । उलूखल ॥ ६ ॥

स्कन्दस्वामीयम् ।

उतेति पदपूरणः, यस्मादर्थे वा । स्मेति तु पदपूरण एव । वनस्पत इति । अ(था ? त्रा)पि तद्धितेन कृत्स्नवन्निगमा भवन्तीत्येवं वनस्पतिविकारस्योलूखलस्याभिधानम् । यस्मात् ते तव हे वनस्पते ! विका(र ? रि)वृक्षावस्थायाम् । वातो वियाति । वातिरत्र सामर्थ्यात् कम्पनार्थः । लट् च भूते काले । वातो विविधमकम्पयदित्यर्थः । किम्, अग्रम् । इच्छब्दस्तु पदपूरणः । अथो, अयमपि पदपूरणः । तस्मादिन्द्राय पातवे पातुम्, इन्द्रः पास्यतीत्येवमर्थम् । सुनु सोमं हे उलूखल ! । वात इन्द्रः । स यस्माद् वृक्षावस्थायाममकम्पनेन तवोपकृतवान्, तस्मात् त्वमपि प्रत्युपकारार्थं तत्पानार्थं सुनु सोममुलूखलेत्यर्थः । अथवा वातो विवात्यग्रमिति निष्प्रयोजनत्वमिति प्रतिपाद्यते । एतदुक्तं भवति । यस्माद् वृक्षावस्थायां वातेन वातेन चाल्यमानमग्रं कस्मिंश्चिदप्यन्यत्राविनियुक्तं निष्प्रयोजनमासीत् । इदानीं तु महति प्रयोजने इन्द्रपानार्थं सोमाभिषवे विनियुक्तमसि । तस्मात् सुनु सोममुलूखलेति ॥ ६ ॥

वेङ्कटमाधवीयम् ।

उत्तरमते । वृक्षविकारस्य धूस्वर् रुति । अपि च ते वनस्पते[1] वातोऽभमेव चरतीन्द्रप्रसादात् । तथा सती द्रस्य पानार्थं सुनु सोममुलूखल ॥ ६ ॥

आयजीवाजसातमाताह्य१च्चाविजर्भृतः ।
हरीइवान्धांसिबप्सता ॥ ७ ॥

आयजी इत्याऽयजी । वाजऽसातमा । ता । हि । उच्चा । विऽजर्भृतः । हरी इवेति हरीऽइव । अन्धांसि । बप्सता ॥ ७ ॥

स्कन्दस्वामीयम् ।

द्वे पेरे मुसलस्य चोलूखलस्य च । उभयदेवते इत्यर्थः । ता सुचति तच्छब्दाद् यच्छब्दोऽत्राध्याहार्यः । ये उलूखलमुसले आयजी मर्यादया यष्टृणी, अवघातद्वारेण यागस्य कर्तृणीत्यर्थः । वाजसातमा अवघातवेलायाम(न्य[2]न्न)स्य सम्भक्तृतमे । ता हि । हिशब्दः पदपूरणः । ते उच्चा उच्चै विजर्भृत हरतेर्यङ्लुगन्तस्य कर्मणीदं, व्यत्ययेन च परस्मैपदम् । मुसल उत्क्षिप्यमाणे पुनः पुनर्विह्रियेते । अथवा हिशब्दो यस्मादर्थ एव । एवन्तु योजना — मर्यादया यष्टृणी अन्नाना च सम्भक्तृतमे उलूखलमुसले । कस्मात् । यस्मात् तत्र उच्चै पुनः पुनर्विह्रियेते इति । इति किं कुर्वाणे । हरी इवान्धांसि बप्सता । हरी इन्द्राश्वौ (घृहस्य[2] बप्स)तिरत्तिकर्मा । यथा हरी यज्ञे स्वभागं धाना ऋजीषं च भक्षयतः, एवमवघातवेला(या) चरुपुरोडाशलक्षणान्य(न्नानि) भक्षयन्ती हवींष्यव(ह्नन्ती[2]हत इ)त्यर्थः ॥ ७ ॥

वेङ्कटमाधवीयम् ।

आयजी । उलूखलमुसलयोर्द्वे । आयष्टव्ये अन्नानां सम्भक्तृतमे[3] । ते सुचे-विह्रियेते भक्षयन्विव धान्यानामवहननकालेऽन्नानि भक्षयन्तौ ॥ ७ ॥

तानोअद्यवनस्पतीऋष्वावृष्वेभिःसोतृभिः ।
इन्द्रायमधुमत्सुतम् ॥ ८ ॥

---

१ 'ऋ[illegible]' ० दे' [illegible] पा० २ 'सम्भक्तृ[illegible]' [illegible] घ० पाठः

ता। नः। अद्य। वनस्पती इति। ऋष्वौ। ऋष्वेभिः। सोतृ-
ऽभिः। इन्द्राय। मधुऽमत्। सुतम्॥ ८॥

### स्कन्दस्वामीयम्।

प्रत्यक्षकृतोऽयं मन्त्रः। इष्वादि चामन्त्रणम्। अ(त्र) यच्छब्दमध्याहृत्यैकवाक्यता नेया। ये ऋष्वौ। ऋष्व इति महन्नाम। महती। ता ते नः अस्मदर्थमद्य। हे वनस्पती! वनस्पतिविकारभूते! उलूखलमुसले! ऋष्वेभिर्महद्भिः सोतृभिः, अभिषो(क्तृ? तृ)भिः ऋत्विग्भिः सह इन्द्राय मधुमत् स्वादुयुक्तम् अन्नं सुतम् अभिषुतम्॥ ८॥

### वेङ्कटमाधवीयम्।

ता नो अद्य। वनस्पती[1] महान्तौ। महद्भिः सोतृभिर्ग्रावभिः सहेन्द्रार्थं मधुमदन्धः सुतम्। परोक्षोपक्रमाः प्रत्यक्षापवर्गाश्च मन्त्रा भवन्ति विपरीताश्चेति॥ ८॥

उच्छिष्टंचम्वोर्भरसोमंपवित्रआसृज।
निधेहिगोरधित्वचि॥ ९॥

उत्। शिष्टम्। चम्वोः। भर। सोमम्। पवित्रे। आ। सृज
नि। धेहि। गोः। अधि। त्वचि॥ ९॥

### स्कन्दस्वामीयम्।

प्रजापतिं हरिश्चन्द्रं चर्म वान्त्या प्रशंसति। अधिषवणं चर्म इयमृक् सूक्तान्त्या प्रशंसति। अधिषवणचर्मदेवतेत्यर्थः। केचित्तु कर्म वान्त्या प्रशंसतीति पठन्ति। ते च यान्यस्यामृचि कर्माणि भरासृज निधेहीति तेषामेषां स्तुतिं मन्यन्ते। तद्द्वारेण वा यागकर्मणः। प्रजापतिं हरिश्चन्द्रमित्येतत्तु प्रजापतेर्हरिश्चन्द्रस्यान्यतरस्योभयोर्वा अस्यामृचि प्रशंसाया असम्भवाद् यथोक्तं तत् पर्येष्यम्। 'अथैनं द्रोणकलशमभ्यवनिनाय उच्छिष्टं चम्वोर्भरेत्येतयर्चा' इति प्रत्यक्षत्वाच्छ्रुतेः सोमप्रशंसार्थत्वमस्या ऋचो न्याय्यतरं दृश्यते। तथाच बृहद्देवताकार आह—'चर्माधिषवणीयं वा सोमं[2] वान्त्या प्रशंसती'ति।

१. 'क्षाश्चत', २. 'स्व वोभ' स पाठः.

उच्छब्दो भरेत्याख्यातेन सम्बन्धयितव्यः । शिष्टम्, अनुपयुक्तम् । चम्वोः, द्विवचननिर्देशादधिषवणफलके अत्र चमूरुच्यते । पञ्चम्यर्थे षष्ठी । षष्ठीनिर्देशाद्वा सकाशादिति वाक्यशेषः । (अधि?) अधिषवणफलकाभ्याम् अधिषवणफलकयोर्वा सकाशाद् उद्धर उद्धर, सोमम् । आत्मन एवायम् अन्तरात्मनः प्रैषः, अध्वर्योर्वा । अथवा उदित्येष अवेत्येतस्य स्थाने शिष्टमित्येतेन सम्बध्यते । चम्वोरिति चम्यतेऽस्मिन् सोम इति चमूश्चमसं, सप्तमीबहुवचनस्य स्थाने व्यत्ययेनेदं द्विवचनम् । भरेत्ययं शुद्धोऽपि भरतिराहरणार्थो द्रष्टव्यः । अवशिष्टं सोमं च समाहरेत्यर्थः । आहृत्य च पवित्रे पावनार्थमासृज प्रक्षिप । आसृज्य च निधेहि स्थापय । द्रोणकलशे । गोरधि त्वचि गोस्त्वच उपरि गोचर्मणि स्थिते द्रोणकलशेऽपनयेत्यर्थः ॥ ९ ॥

## वेङ्कटमाधवार्यम् ।

उच्छिष्टम् । चमोरधिषवणयोर्वा सोमं याभ्यां प्रशंसतीत्युक्तम् । प्रजापतेर्हरिश्चन्द्रस्यान्त्या चर्मप्रशंसा चेति कात्यायनः । हरिश्चन्द्राधिषवणफलकयोरपर्यवशिष्टं सोमं भर सुतं च सोमं दशापवित्र आसृज । तदर्थं निधेह्यधिषवणफलकयोरन्तरे गोस्त्वचीति ॥ ९ ॥

इति प्रथमस्य द्वितीये षड्विंशो वर्गः ॥

यच्चिद्धि स॑त्य सोमपा अनाशस्ता इ॑व स्म॒सि॑ ।
आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥

यत् । चि॒त् । हि । स॒त्य॒ । सो॒म॒ऽपाः॒ । अ॒ना॒श॒स्ताःऽइ॑व । स्मसि॑ । आ । तु । नः॒ । इ॒न्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ २७ ॥

## स्कन्दस्वामीयम् ।

तं विश्वेदेवा ऊचुः । इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमस्तन्नु स्तुहाय त्वोत्स्रक्ष्याम इति । स इन्द्रं तुष्टाव । ऐन्द्रं यच्चिद्धिसत्येत्युत्तरं चाश्विनात्तृचात् । आश्विना(व?द)श्वावत्येत्येतस्मात् । यदिति सुपां

सुलुक्—' (७-१-३९) इति पञ्चम्या लुक् । चिद्धीति पदपूरणे । यस्मात् हे सत्य ! सोमपाः ! सोमानां पातः ! । अनाशस्ता इव ईषच्छंसनं स्तुतिः (त ?) शस्तमविद्यमानमाशस्तं येषां ते अनाशस्ताः ईषत्स्तुतिवर्जिताः, अत्यन्तस्तुतिपरा भवन्त इत्यर्थः । इवशब्दस्तु अस्त्युपमानर्थस्य सम्प्रत्यर्थे प्रयोग इति पदपूरणः । स्मसि भवाम । यस्मादत्यन्तं स्तुम इत्यर्थः । यस्मादिति वचनात् तस्मादित्यध्याहार्यम् । तस्मात् नः शंसय । तु इति पदपूरणः क्षिप्रार्थे (वा) । क्षिप्रमस्मान् शंसय प्रार्थयमानान् प्रार्थितसम्पादनेन प्रयुङ्क्ष्व देहीत्यर्थः । हे इन्द्र ! । किमुच्यते । गोष्वश्वेषु । द्वितीयार्थेऽत्र सर्वत्र सप्तमी । गाः अश्वांश्च । कीदृशान् । शुभ्रिषु शुभ्रिणः शोभावतः, शोभनानि इत्यर्थः । कियतः । सहस्रेषु सहस्रसङ्ख्याकान् । हे तुवीमघ । बहुधन ! ॥ १ ॥

वेङ्कटमाधवीयम् ।

यच्चिद्धि । यत् सत्य ! सोमस्य पातर्वयमाशंसारहिता दरिद्रैरपि प्रार्थिता इव भवामः । तस्मादस्मान् बहुधन ! दरिद्रैः क्षिप्रमाशंसय गवादिषु त्वया दत्तेषु शुभ्रिणः शोभायुक्ता इति । यद् वा स्तुतिरहितानाशंसय गवादिप्रदानेनेति ॥ १ ॥

शिप्रिन्वाजानांपतेशचीवस्तवदंसना ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ २ ॥

शिप्रिन् । वाजानाम् । पते । शचीऽवः । तव । दंसना । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ २ ॥

स्कन्दस्वामीयम् ।

शिप्रे हनू नासिके वा तद्वन् ! । अथवा 'शिप्रा शीर्षसु वितता हिरण्ययी'रिति प्रयोगदर्शनात् शिप्रशब्दः शिरस्त्राणवचनः, तद्वन् ! । वाजानां पते ! बलानामन्नानां वा स्वामिन् ! शचीवः ! कर्मवन् ! प्रज्ञावन् ! वा । तव । दंसना । 'दंसि दंसनदर्शनयोः' । दर्शना । का । स्त्रीलिङ्गनिर्देशाद् वाक् स्तुतिर्वास्मासु । यत एवम्, अतो ब्रूमः । आतून इन्द्रेत्याद्युक्तार्थम् ॥ २ ॥

वेङ्कटमाधवीयम् ।

शिप्रिन् वाजानाम् । हनूमद्वलपते ! प्रजावन् ! तव विद्यते कल्याणं कर्मेति ॥ २ ॥

नि ष्वा॑पया मिथू॒दृशा॑ स॒स्ताम॑बुध्यमाने ।

आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥३॥

नि । स्वा॒प॒य॒ । मि॒थु॒ऽदृशा॑ । स॒स्ताम् । अबु॑ध्यमाने॒ इति॑ ।

आ । तु । नः॒ । इ॒न्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु ।

तु॒वि॒ऽम॒घ॒ ॥ ३ ॥

स्कन्दस्वामीयम् ।

मुमूर्षुः किल विकृतरूपाणि प्रेतपिशाचानि मिथुनानि पश्यति । तदभावमत्र शुनश्शेप आशास्ते । निष्वापय, अदर्शनपरिहारार्थं नियमेन स्वापय । मिथूदृशा मिथुनीभूते ये दृश्येते ते मिथूदृशा प्रेतः पिशाचो वा पुमान् स्त्री च ते च सस्तां स्वप्नं कुरुताम् । अबुध्यमाने प्रतिबोधवर्जिते । किञ्च आतून इत्याद्युक्तार्थम् ॥ ३ ॥

वेङ्कटमाधवीयम् ।

निष्वापय । मुमूर्षुः प्राणहरणार्थं यमादागते मिथुनीभूते दृश्यमाने द्वे स्त्रियौ[2] पश्यति । ते त्वामिन्द्र ! निष्वापय । त्वया निष्वापिते मया अबुध्यमाने सस्तां स्वसाम् ॥ ३ ॥

स॒सन्तु॒ त्या अरा॑तयो॒ बोध॑न्तु शूर रा॒तयः॑ ।

आ तू न॑ इन्द्र शंसय॒ गोष्वश्वे॑षु शु॒भ्रिषु॑ स॒हस्रे॑षु तुवीमघ ॥ ४ ॥

स॒सन्तु॑ । त्याः । अरा॑तयः । बोध॑न्तु । शू॒र॒ । रा॒तयः॑ । आ ।

तु । नः॒ । इ॒न्द्र॒ । शं॒स॒य॒ । गोषु॑ । अश्वे॑षु । शु॒भ्रिषु॑ । स॒हस्रे॑षु । तु॒वि॒ऽम॒घ॒ ॥ ४ ॥

---

१ 'ते प्रसवस्तां स स्वप्नं स्वप्नान्तु' क ख. पाठः. २ 'यौ च प' ख. पाठः

स्कन्दस्वामीयम् ।

तच्छब्दश्रुतेर्योग्या(व ? र्थं)सम्बन्धो यच्छब्दोऽत्राध्याहार्यः । ये (ज ? जा)ग्रतो मां मुच्यमानं नेच्छन्ति । ससन्तु स्वपन्तु । त्या अरातयः । अरातिशब्दः शत्रुपर्यायः । (त ? त्य)स्य च पुंलिङ्गत्वात्स्त्या इति व्यत्ययेन टाप् । ते मच्छत्रवः । (मे ?) बोधन्तु बुध्यन्ताम् । हे शूर ! रातयः ज्ञातयः, ये मा मुच्यमानमिच्छन्तीत्यर्थः । अरातय इत्य(मा ? दा)नान्यत्रोच्यन्ते । न रातयो दानानि । स्वपन्तु अव्यापाराणि भवन्तु । यानि तु मदायुधो दानानि, तानि बुध्यन्तां व्याप्रियन्ताम् । सदा देहि म अ(यु)रित्यर्थः । किञ्च आतून इत्याद्युक्तार्थम् ॥ ४ ॥

वेङ्कटमाधवीयम् ।

ससन्तुत्याः । स्वपन्तु चाज्ञातयो, बुध्यन्तु च शूर ! ज्ञातयः ॥ ४ ॥

समिन्द्रगर्दभंमृणनुवन्तंपापयामुया ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ५ ॥

सम् । इन्द्र । गर्दभम् । मृण । नुवन्तम् । पापया । अमुया ।

आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ५ ॥

स्कन्दस्वामीयम् ।

हे इन्द्र ! गर्दभं संमृण । (सं ?) 'मृण हिंसायाम् ।' भिन्धि । नुवन्तं शब्दं कुर्वन्तमारटन्तमित्यर्थः । पापयामुया । स्त्रीलिङ्गनिर्देशाद्वाचा । गर्दभोऽपि विस्वरमार(ट)न्ननिष्टस्य सूचकः तेनायं तद्वधात आशास्यते । किञ्च आतून इत्याद्युक्तार्थम् ॥ ५ ॥

वेङ्कटमाधवीयम् ।

समिन्द्र । गर्दभं शब्दायमानं पापया वाचा ॥ ५ ॥

पतातिकुण्डृणाच्यादूरंवातोवनादधि ।

आतूनइन्द्रशंसयगोष्वश्वेषुशुभ्रिषुसहस्रेषुतुवीमघ ॥ ६ ॥

पतांति । कुण्डृणाच्यां । दूरम् । वातः । वनांत् । अधि । आ ।
तु । नः । इन्द्र । शंसय । गोर्षु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुवि-
ऽमघ ॥ ६ ॥

## स्कन्दस्वामीयम् ।

अर्धर्चान्त्योऽधिशब्दोऽपकृष्य पततीत्याख्यातेन सम्बन्धयितव्यः । अधिपतति । अधीत्युपरिभावे । उपरि पतति । ऊर्ध्वं गच्छतीत्यर्थः । किम् । कुण्डृणाच्या । अञ्चतिर्गत्यर्थः । कुण्डाकारा भूत्वाञ्चतीत्यर्थः । कुण्डृणाची वात्या । तृतीया च प्र(थ)मार्थे । दूरं वातो वनात् । वनमरण्यम् । वातोऽरण्याद् दूरं पतति तिर्यग् गच्छति । औचित्यप्रदर्शनं चास्यार्धर्चस्य उत्तरेणैकवाक्यता । एतदुक्तं भवति — यथैव वात्याया ऊर्ध्वगमनमुचितं, भवति च द्वयोश्च (?) तिर्यग्गमनम्, एवं भवतोऽपि स्तोतानुग्रहकरणमेव । किञ्च आतून । अथवा कुड्येऽञ्चतीति कुण्डृणाची कुड्यचरी गरगोलिकोच्यते । गरोलिकेति यापभ्रंशेन लोके प्रसिद्धा । तथाश्वमेधपशुषु नरगोलिकायामस्य प्रयोगः — 'कुण्डृणाची गोलत्तिका अप्सरसाम्'इति । साधिपतति ऊर्ध्वं गच्छति । (य ? या)कुड्ये चङ्क्रम्यते इत्यर्थः । तस्या हि कृष्णाया दर्शनमनिष्टस्य सूचकम् । तदनेन प्रतिपादयति । वातश्च वनाद् दूरं गच्छति । मा स्वप्न आदायेति वाक्यशेषः । तद्धि मुमूर्षोर्भवति । तथाचिरमरणस्वप्नमधिकृत्य श्रुतिर्भवति — 'आशु वायुरेन प्रवहति' इति । एताभ्यां द्वाभ्यां लिङ्गाभ्यामासन्नमरणतया मां ज्ञात्वानुग्राहकाभावात्त्वादातून इन्द्र । किं, सामर्थ्यादायुर्देहीत्यर्थः । न च केवलमायुः, किं तर्हि, गोष्वश्वेषु शुभ्रिषु सहस्रेषु इत्यादिकमुक्तार्थम् ॥ ६ ॥

### वेङ्कटमाधवीयम् ।

पतति । कुण्डृणाची नाम पक्षी । तेन सहारण्याद् दूरं मत्समीपमापतति वायुः ॥ ६ ॥

सर्वं परिक्रोशं जहि जम्भया कृकदाश्वम् ।
आतू न इन्द्र शंसय गोष्वश्वेषु शुभ्रिषु सहस्रेषु तुवीमघ ॥७॥

सर्वम् । परिऽक्रोशम् । जहि । जम्भय । कृकदाश्वम् । आ । तु । नः । इन्द्र । शंसय । गोषु । अश्वेषु । शुभ्रिषु । सहस्रेषु । तुविऽमघ ॥ ७ ॥

स्कन्दस्वामीयम् ।

अनिष्टं यत् सूचयति, तत् सर्वं त्वं सृगालवायसादिकं जहि । किञ्च जम्भय जभिर्नाशने, नाशय । कृकदाश्वं, कृकलासः कृक(ला? दा)श्व उच्यते । तस्य दर्शनमनिष्टस्य सूचकम् । किञ्च आतून इत्याद्युक्तार्थम् ॥ ७ ॥

वेङ्कटमाधवीयम् ।

सर्वं परिक्रोशम् । अन्यमपि सर्वं परिक्रोष्टारं वृकादिकं नाशय जम्भय कृकलासमातून इन्द्रेति ॥ ७ ॥

इति प्रथमस्य द्वितीये सप्तविंशो वर्गः ॥

---

आ घ इन्द्रं क्रिविं यथा वाजयन्तः शतक्रतुम् ।

मंहिष्ठं सिञ्च इन्दुभिः ॥ १ ॥

आ । वः । इन्द्रम् । क्रिविम् । यथा । वाजऽयन्तः । शतऽक्रतुम् । मंहिष्ठम् । सिञ्चे । इन्दुऽभिः ॥ १ ॥

स्कन्दस्वामीयम् ।

वेङ्कटमाधवीयम् ।

अव इन्द्रम् । यथाकामिच्छन्तः कूपमुसिञ्चन्ति तस्य सेकार्थम्, एवं युष्मदर्थं मह्यं दातृतमामिन्द्रं सोमैर्हुताराह्वेति कामानुत्सिञ्चामीति ॥ १ ॥

शतंवायःशुचीनांसहस्रंवासमाशिराम् ।

एदुनिम्नंनरीयते ॥ २ ॥

शतम् । वा । यः । शुचीनाम् । सहस्रम् । वा । सम्ऽआशिराम् । आ । इत् । ऊँ इति । निम्नम् । न । रीयते ॥ २ ॥

स्कन्दस्वामीयम् ।

द्वावपि वाशब्दौ चार्थे । य इन्द्रः शतं शुचीनां शुद्धानां सोमानाम् । सहस्र च समाशिराम् । सोमश्रिणं दध्याशीरुच्यते । तेन सम्मिश्रानत्यन्तबहून् सोमान् इत्यर्थः । एदु निम्नं न रीय(न्ते ? ते) । आ इत्युपसर्गो रीयत इत्याख्यातेन सम्बध्यते । रीयत इति चार्थं 'रीयते नेजती'ति गतिकर्मसु पाठाद् गत्यर्थं । इत् ऊ इति पदपूरणौ । अस्याश्चर्च उद्देशार्थं यच्छब्दश्रुतेः सर्वेषां पादानामुद्देश एवान्तर्गतत्वात् प्रतिनिर्देशात् तच्छब्दस्याध्याहारशङ्केः पूर्वयर्चैकवाक्यता । पूर्वा च 'आ व' इति युष्मच्छब्दात् प्रत्यक्षकृता । अतोऽत्र रीयते इति (प्र ? व्य)त्ययेन मध्यमस्य स्थाने प्रथमपुरुषः । आरीयसे । पानार्थमागच्छसीत्यर्थः । कथम् । निम्नं न निम्नमिव प्रदेशम् । (कं ? किम्) । सामर्थ्यादुदकम् । यथा निम्नं प्रदेशमुदकं शीघ्रमागच्छति, तद्वद् यः पानार्थमत्य(न्तब)हून् सोमान्शीघ्रमागच्छसि, तं त्वामिन्द्रं वाजयन्त आसि(षि)म सोमनि(त्या)शास्महे इति समस्तार्थः ॥ २ ॥

वेङ्कटमाधवीयम् ।

शतं वा । एतानां सोमानां सहस्रं वा सम्यगाशिरेण मिश्रितानामेवमिच्छति निम्नमिवोदकम् ॥ २ ॥

संयन्मदायशुष्मिणएनाह्यस्योदरे ।

समुद्रोनव्यचोदधे ॥ ३ ॥

---

१. 'नां मे व' ख. ग. पाठ.

सम्। यत्। मदा॑य। शुष्मिणे॑। एना। हि। अस्य। उदरे॑। समुद्रः। न। व्यचः॑। दधे॑॥ ३॥

## स्कन्दस्वामीयम्।

यत् कीदृशम्। शतं सहस्रं[1] मदार्थं बलार्थं चारयेन्द्रस्योदरे समुद्रो न समुद्र इव व्यचः व्याप्तिं संदधे सम्यग् धारयति। यथा समुद्रो व्याप्नुवन्निवमुदरं व्याप्यावतिष्ठन्त इत्यर्थः। किं तस्य। नदं व आदोयसे तं वाजयन्त आसि(धे)मेत्येतदाशास्महे इत्येवं यच्छब्दस्य पूर्वाभ्यामृग्भ्यामेकवाक्यता॥ ३॥

## वेङ्कटमाधवीयम्।

संयन्मदाय। यत् सोमपात्रशतमस्य बलिन इन्द्रस्य मदाय भवति, सहस्रं यामेनास्योदरेऽन्तरिक्षमिव व्याप्तिः सन्दधे यथान्तरिक्षं विततं तद्वद्[2]॥राधामिति। तस्मादागच्छतीति॥ ३॥

अयमुतेसमतसिकपोतइवगर्भधिम्।

वचस्तच्चिन्नओहसे॥ ४॥

अयम्। ऊँ इति॑। ते॒। सम्। अतसि। कपोतः॑ऽइव। गर्भ॑ऽधिम्। वचः॑। तत्। चित्। नः॒। ओ॒ह॒से॒॥ ४॥

## स्कन्दस्वामीयम्।

अयमिति सन्निहितस्य सोमस्य प्रतिनिर्देशः। उ इति पदपूरणः। अयं तेऽभिषुतः सोमः समतसि। 'अत सातत्यगमने'। एकवाक्यताप्रसिद्ध्यर्थं यच्छब्दोऽध्याहर्तव्यः। यं प्रति सम्यक् सततं गच्छसि। कथम्। कपोतइव गर्भधिम्। गर्भो धीयतेऽस्यामिति गर्भ(धिः) कपोतिकात्राभिप्रेता। यथा मैथुनार्थी कपोतः कपोतिकां (द्रुदे? तद्वदि)त्यर्थः। वचस्तच्चित्। चिच्छब्दः पदपूरणः। तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहर्तव्यः। यदिदमुक्तं वचः तन्नः अस्माकम् ओहसे। वहेः सम्प्रसारणेन गुणेन चेदं रूपम्। वहस्वास्मानं प्रति प्रापय। शृण्वित्यर्थः। श्रुत्वा च सोमेनैव तृप्तो मां मोचयेत्यभिप्रायः॥४॥

---

१. 'चन्द्र' क. ख. पाठः. २. 'तं मत् तद्' घ. पाठः.

वेङ्कटमाधवीयम् ।

अयमुते । अयं सोमस्त्वदीयः, स त्वं कपोत कपोतीमिव गर्भधानीं पिपासुः सङ्गच्छसि । स्तुतिं च तामस्मदीयामात्मानं प्रापयसि ॥ ४ ॥

स्तोत्रंराधानांपतेगिर्वाहोवीरयस्यते ।
विभूतिरस्तुसूनृता ॥ ५ ॥

स्तोत्रम् । राधानाम् । पते । गिर्वाहः । वीर । यस्य । ते । विऽभूतिः । अस्तु । सूनृता ॥ ५ ॥

स्कन्दस्वामीयम् ।

यावत् किञ्चित् स्तोत्रं तत् सर्वं हे राधानां पते । धनानां स्वामिन् ! गिर्वाहः ! गिरः स्तुतयः ता (ऊ ? उ)ह्यन्ते प्राप्यन्ते यत्र स्तोतृभिः स गिर्वाहः, तस्य संबोधनं हे गिर्वाहः ! स्तुत्याश्रयेत्यर्थः । वीर ! विक्रान्त ! । यस्येति । ते तव । सर्वे स्तोत्रे ये स्तूयसे इत्यर्थः । यच्छब्दश्रुतेस्तच्छब्दोऽध्याहार्यः । तस्य विभूतिरस्तु । विभवतीति विभूतिः समग्रस्तुतिकरणसमर्था अस्तु भवतु । का । सूनृता । अपठितमपि वाङ्नामैतत् । अथवा विभूतिशब्द ऐश्वर्यवचनः । सामर्थ्याच्चान्तर्णीतमत्वर्थः । विभूतिमत्यस्तु । मदैश्वर्यकरी(य !) स्तुतिलक्षणा मदीया वा(गि ? ग)स्त्वित्यर्थः । अथवा या तव विभूतिः, सास्तु सूनृता । शोभनेषु नृषु स्तुतिपरेषु तायते विस्तीर्यते इति सूनृता स्तोत्र(सु ? कृ)द्भोग्येत्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

स्तोत्रम् । गीर्भिरुह्यमानमन्नानां पते यस्य तव स्तोत्रमिदमनेन क्रियते स्तोत्रा तस्मै सत्या श्रीरस्तु ॥ ५ ॥

इति प्रथमस्य द्वितीयेऽष्टाविंशो वर्गः ॥

---

ऊर्ध्वस्तिष्ठान ऊतयेऽस्मिन्वाजेशतक्रतो ।
समन्येषुब्रवावहै ॥ ६ ॥

---

१ 'ह' ग घ पाठ

ऊर्ध्वः । तिष्ठ । नः । ऊतये । अस्मिन् । वाजे । शतक्रतो इति शतऽक्रतो । सम् । अन्येषु । ब्रवावहै ॥ ६ ॥

स्कन्दस्वामीयम् ।

उत्तिष्ठ । यद् ब्रवीमि तत्र प्रवर्तस्वेत्यर्थः । नः अस्माकं पालनाय । अस्मिन् वाजे सङ्ग्रामे । आत्ममरणफलत्वाद् यज्ञमेव सङ्ग्राममाह । हे शतक्रतो । समन्येषु । अन्येष्विति द्वितीयार्थे सप्तमी । सम्भूयान्यान् देवान् ब्रवावहै मद्विमोचनार्थमभ्यर्थयामह इत्यर्थः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

ऊर्ध्वस्तिष्ठ । ऊर्ध्वस्तिष्ठास्माकं रक्षणायास्मिन् सङ्ग्रामे शतकर्मन्नन्येषु त्वं चाहं च सम्भूय ब्रवावहै ॥ ६ ॥

*योगेयोगेतवस्तरंवाजेवाजेहवामहे ।
सखायइन्द्रमूतये ॥ ७ ॥

योगेऽयोगे । तवःऽतरम् । वाजेऽवाजे । हवामहे । सखायः । इन्द्रम् । ऊतये ॥ ७ ॥

स्कन्दस्वामीयम् ।

अपूर्वस्यागमो योग इत्यत्रेच्छाप्राप्तिः । तत्र तत्रेच्छाप्राप्तौ बलवत्तरमिन्द्रं तत्र तत्र सङ्ग्रामे च हवामहे । हे सखायः । इदमदं ददातीतीन्द्रं (?) तत्र तत्र पालनाय ॥ ७ ॥

वेङ्कटमाधवीयम् ।

योगे योगे । प्रत्येते प्रत्येकेऽतिशयेन बलयुक्तमिन्द्रं युद्धे युद्धे हवामहे सखायः सन्तो रक्षणाय ॥ ७ ॥

आघागमद्यदिश्रवत्सहस्रिणीभिरूतिभिः ।
वाजेभिरुपनोहवम् ॥ ८ ॥

---

१. 'रिस', २. 'विमोमभ्य' क. ख. पाठः.

---

* क- ख. मातृकयोरस्या ऋचो व्याख्या न दृश्यते ।

आ । घ । गमत् । यदि । श्रवत् । सहस्रिणीभिः । ऊतिऽभिः । वाजेभिः । उप । नः । हवम् ॥ ८ ॥

स्कन्दस्वामीयम् ।

घ इति पदपूरणः । उपेति तृतीयपादस्थ उपसर्ग आगमदित्याख्यातेन सम्बन्धयितव्यः । उपागमत् उपागच्छत् । यदि श्रवत् शृणुयादिन्द्रः । कथं पुनरुपागच्छत् । सहस्रिणीभिरूतिभिः । 'इत्थम्भूतलक्षणे' (२-३-२१) इत्येवमेषा तृतीया । सहस्रसङ्ख्यायुक्तैः पालनैः सम्बद्धः । पालनसाहस्रैरस्मान् पालयन्नित्यर्थः । वाजेभिः अन्नैश्च, अन्नानि च दददित्यर्थः । किं यदि शृणुयात् । उच्यते । नः अस्माकं स्वभूतं हवमाह्वानम् ॥ ८ ॥

वेङ्कटमाधवार्यीयम् ।

आगमत् । उपागच्छेदिन्द्रो यदि शृणुयादाह्वानं सहस्रसङ्ख्यैः पालनैरन्नैश्च ॥ ८ ॥

अनु॑ प्र॒त्नस्यौक॑सो हु॒वे तु॑विप्र॒तिं नर॑म् ।
यं ते॒ पूर्वं॑ पि॒ता हु॒वे ॥ ९ ॥

अनु॑ । प्र॒त्नस्य॑ । ओक॑सः । हु॒वे । तु॒वि॒ऽप्र॒तिम् । नर॑म् । यम् । ते॒ । पूर्व॑म् । पि॒ता । हु॒वे ॥ ९ ॥

स्कन्दस्वामीयम् ।

अनुशब्दो लक्षणे कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । प्रत्नमिति पुराणनाम । ओक इति निवासनाम । षष्ठी चेयमत्र कर्मप्रवचनीययोगलक्ष(णा)द्वितीयास्थाने । पुराणनिवासस्थानं सोमाख्यं प्रति हुवे आह्वयामि । त्वां कीदृशम् । तुविप्रतिम् । तुविरिति बहुनाम । प्रतिशब्द उपसर्गः । उपसर्गाश्च पुनरेवमात्मकाः यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते, तत्र क्रियाविशेषमाहुः । यत्र क्रियावाची शब्दो न प्रयुज्यते, ससाध(न)ां तत्र क्रियामाहुः । तेनायं प्रत्यवस्थातरि प्रतिशब्दो वर्तते । बहूनां प्रत्यवस्थाता तुविप्रतिः, कृतानेकयुद्ध इत्यर्थः । तं तुविप्रतिं नरं मनुष्याकारं यम् । ते । द्वितीयार्थे षष्ठ्येषा । यं त्वां पूर्वं पितापि मम हुवे आहूतवान् । अथवा यमिति

प्र(श्न ? स्त)रयोकसः सोमाख्यस्य प्रतिनिर्देशः । यं सोमं ते तव स्वभूतं प्रति पिता ममाहूतवान् इति ॥ ९ ॥

वेङ्कटमाधवीयम् ।

अनुमत्तस्य । यमिन्द्रं तव पिताहूतवान् तमहं त्वदर्थं पुराणस्यास्य निवासस्थानादनुक्रमेण हुवेऽनेकेषु गच्छन्तं नेतारम् ॥ ९ ॥

तंत्वावयंविश्ववाराशास्महेपुरुहूत ।

सखेवसोजरितृभ्यः ॥ १० ॥

तम् । त्वा । वयम् । विश्वऽवार । आ । शास्महे । पुरुऽहूत ।
सखे । वसो इति । जरितृऽभ्यः ॥ १० ॥

स्कन्दस्वामीयम् ।

उक्तगुणोऽसि । तं त्वा वयं हे विश्ववार! सर्वस्य वरणीय!.(मह?) आशास्महे प्रार्थयामहे । आत्मनोऽर्थाय जीवितं याचामह इत्यर्थः । हे पुरुहूत! सखे! वसो! । शतपथे—'यतो नु श्रेष्ठस्तेन वसिष्ठ' इति वासिष्ठशब्दस्य श्रेष्ठशब्देनार्थनिवरणदर्शनाद् वसुशब्दः प्रशस्यवचनः धनना(म ? मा) चात्रान्तर्णीतमत्वर्थः । प्रशस्त! धनवन्! वा । (व?)न केवलमात्मन एवार्थाय किं तर्हि । जरितृभ्यः अन्येषामपि स्तोतृणामर्थाय । अथवा जरितृभ्य इत्यात्मन एव प्रतिनिर्देशः । स्तोतुरात्मनोऽर्थायेत्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

तं त्वा वयम् । तं त्वा वयं सर्वैर्वरणीयं प्रार्थयामः सखे! वासयितः! स्तोतृणाम् ॥ १० ॥

इति प्रथमस्य द्वितीये एकोनत्रिंशो वर्गः ॥

---

अस्माकंशिप्रिणीनांसोमपाःसोमपाव्नाम् ।

सखेवज्रिन्सखीनाम् ॥ ११ ॥

अस्माकम् । शिप्रिणीनाम् । सोमऽपाः । सोमऽपाव्नाम् । सखे ।
वज्रिन् । सखीनाम् ॥ ११ ॥

स्कन्दस्वामीयम् ।

शिप्रे हनू नासिके वा तद्वतामित्यर्थः । हे सोमपाः ! सोमपानां सोमस्य पातॄणाम् । हे सखे ! वज्रिन् ! सखीनाम् । तथा तदस्तु त्वत्प्रसादेन ॥ ११ ॥

वेङ्कटमाधवीयम् ।

अस्माकम् । अस्माकं सोमपानसाधनभूतादिभायुक्तानां सोमस्य पात ! सोमपातॄणां सखे ! वज्रिन् ! । सखीनामुत्तरत्र सम्बन्धः ॥ ११ ॥

तथा तदस्तु सोमपाः सखे वज्रिन् तथा कृणु ।

यथा त उश्मसीष्टये ॥ १२ ॥

तथा । तत् । अस्तु । सोमऽपाः । सखे । वज्रिन् । तथा । कृणु । यथा । ते । उश्मसि । इष्टये ॥ १२ ॥

स्कन्दस्वामीयम् ।

तथा तदस्तु । सखीनां त्वत्प्रसादेन हे सोमपाः ! सखे ! वज्रिन् ! तथा कृणु, यथा उश्मसि कामयामहे वयम् । वयं हि चिरं जीवे(मे)ति कामयामहे । त्वत्प्रसादेन तथैवास्तु । त्वमपि तत् तथैव कुर्वित्यर्थः । किमर्थम् ? इष्टये तव यागाय ॥ १२ ॥

वेङ्कटमाधवीयम् ।

तथा तदस्तु । यथा वयं त्वत्तः कामयामहे तथास्माकं तदस्तु । सखे ! वज्रिन् ! त्वं तथा कुरु । इष्टये अभिलषितसिद्ध्यर्थमिति ॥ १२ ॥

रेवतीर्नः सधमाद इन्द्रे सन्तु तुविवाजाः ।

क्षुमन्तो याभिर्मदेम ॥ १३ ॥

रेवतीः । नः । सधऽमादे । इन्द्रे । सन्तु । तुविऽवाजाः । क्षुऽमन्तः । याभिः । मदेम ॥ १३ ॥

स्कन्दस्वामीयम् ।

रेवतीरित्येतत् सन्त्वित्येतेन सम्बन्धयितव्यम् । रेवतीः सन्तु धनवत्यो भवन्तु । धनस्य साधिका भवन्त्वित्यर्थः । नः अस्माकम् । काः वाक्यसाम-

१. 'तेन सि' इति भ. पाठः.

थ्यीत् स्तुतयः । कस्य । उच्यते । सधमादे इन्द्रे । षष्ठ्यर्थे सप्तम्येषा । सहैभूतैर्या माद्यते तर्प्यते स्तूयते स सधमाद इन्द्रः तस्य । (न) च रेवतीरेव केवलाः । किं तर्हि । तुविवाजाः बहन्नाश्च । अन्नस्य बहुसाधिका इत्यर्थः । याः कीदृश्यः । उच्यते । क्षुमन्तः । 'क्षु शब्द' इत्यस्य । कीर्तिवचनः । कीर्तिमत्यः । वयं याभिः मदेम । मदतीत्यर्चतिकर्मसु पाठाद् मदतिः स्तुत्यर्थः । याभिर्नित्यमिन्द्रं (स्तु ? स्त)वामेत्याशास्महे इत्यर्थः ॥ १३ ॥

### वेङ्कटमाधवीयम् ।

रेवतीर्नः । योऽस्माभिः सह मदतीन्द्रस्तस्मिन्निन्द्रे बहुन्ना आपोऽस्माकं सन्तु । क्षुधिमा वयं याभिर्मदेम शब्दवन्तो विद्यात्ता वेति ॥ १३ ॥

आघत्वावान्त्मनाप्तस्तोतृभ्योधृष्णवियानः ।

ऋणोरक्षन्नचक्रयोः ॥ १४ ॥

आ । घ । त्वाऽवा॑न् । त्मना॑ । आ॒प्तः । स्तोतृऽभ्यः॑ । धृष्णो॒ इति॑ । इ॒या॒नः । ऋ॒णोः । अक्ष॑म् । न । च॒क्र्योः॑ ॥ १४ ॥

### स्कन्दस्वामीयम् ।

आ इत्युपसर्गः ऋणोरित्याख्यातेन सम्बन्धयितव्यः । घ इति पदपूरणः । त्वावान् त्वत्सदृशः । त्मनाप्तः आत्मना स्तोतृभिः स्तुतिभिर्वा व्याप्तः । स्तुतः सन्नित्यर्थः । स्तोतृभ्यः । हे धृष्णो ! प्रगल्भ ! अभिभवितर्वा शत्रूणाम् । (इयानः) । ईमहे इत्यस्य याच्ञाकर्मण इदं रूपम् । याच्यमानः । आऋणोः । 'ऋणु गतौ' । सामर्थ्याच्चान्तर्णीतण्यर्थः । व्यत्ययेन च प्रथमपुरुषस्य स्थाने मध्यमपुरुषः । आऋणोत् आगमयति । किम् । सामर्थ्यादुत्तरस्यां चार्चि दर्शनात् कामान्, स्तोतृभ्यो ददातीत्यर्थः । कथं च पुनः प्रेरयति । अक्षं न चक्र्योः । यथा अक्षं कश्चित् प्रक्षिपेदेवं कामान् स्तोतृषु प्रक्षिपेदित्यर्थः ॥ १४ ॥

### वेङ्कटमाधवीयम् ।

आघत्वावान् । त्वत्सदृशः स्तोत्रकार्यैः शत्रूणां धर्षयितः ! स्वयमेव गच्छन् भवति बन्धुः । तथा त्वं च स्वयमेवागतः सन् स्तोतॄणां कामान् ऋणोः प्राक्षिपः यथाक्षं चक्र्योः प्रक्षिपन्ति ॥ १४ ॥

---

१. 'ह तै' ख. पाठः. २. 'न्तः' क. ख. पाठः.

आयद्दुवःशतक्रतवाकामंजरितॄणाम् ।

ऋणोरक्षंनशचीभिः ॥ १५ ॥

आ । यत् । दुवः । शतक्रतो इति शतऽक्रतो । आ । कामम् ।
जरितॄणाम् । ऋणोः । अक्षम् । न । शचीभिः ॥ १५ ॥

स्कन्दस्वामीयम् ।

आ ऋणो. आगमयसि आत्मनि प्रेरयसि । यद् दुवः । दुव इति परिचरणा । यावती काचित् परिचर्या, तया सर्वया स्तोतृभिरात्मानं परिचारयसीत्यर्थः । नच दुव एव केवलम् । किं तर्हि । शतक्रतो । आ कामं जरितॄणाम् ऋणोः । कामानपि स्तोतॄणामागमयसि प्रेरयसि । सम्पादयसीत्यर्थः । कथं प्रेरयसि । अक्षं न अक्षमिव शचीभिः प्रज्ञाभिः कर्मभिर्वा ॥ १५ ॥

वेङ्कटमाधवीयम्।

आयद्दुवः । स्तोतॄणां परिचरणं कर्म कामं चाक्षमिव चक्रयायदा त्वं प्रज्ञाभिः प्राक्षिपस्तदा स्वयमेवागच्छसीति ॥ १५ ॥

इति प्रथमस्य द्वितीये त्रिंशो वर्गः ॥

---

"तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ । तमेतया प्रतीयाय शाश्वदिन्द्र इति ।"

शाश्वदिन्द्रःपोप्रुथद्भिर्जिगायनानदद्भिःशाश्वसद्भिर्धनानि ।

सनोहिरण्यरथंदंसनावान्त्सनःसनितासनयेसनोदात् ॥

शश्वत् । इन्द्रः । पोप्रुथत्ऽभिः । जिगाय । नानदत्ऽभिः । शाश्वसत्ऽभिः । धनानि । सः । नः । हिरण्यऽरथम् । दंसनाऽवान् । सः ।
नः । सनिता । सनये । सः । नः । अदात् ॥ १६ ॥

स्कन्दस्वामीयम्।

स नो हिरण्यरथमिति तच्छब्दात् यच्छब्दोऽध्याहार्यः। शश्वच्छब्दश्च नित्यपर्याय। यो नित्यमिन्द्रः पोप्रुथद्भिः। '(पोप्टृ? प्रोथृ) पर्याप्ताविʼत्यस्यैतद्रूपम्। अभ्यस्तानामुपधाह्रस्वत्वमपीत्येवं ह्रस्वत्वम्। पर्याप्तिश्च समर्थीभाव उच्यते। अत्यर्थं समर्थैरश्वैः। जिगाय जयति। नच केवलं पोप्रुथद्भिः। किं तर्हि। नानदद्भिः। अत्यर्थं पुनः पुनर्वा हेषद्भिरित्यर्थः। श्वाश्वसद्भिश्च शश्वगातेरित्यर्थः। अत्यर्थं पुनः पुनर्वा श्वासं कुर्वद्भिः। किं पुनर्जिगाय। उच्यते। धनानि असुराणां स्वभूतानि। स नः। सम्प्रदान एषा चतुर्थी अदादित्येतेन व्यवहितेनाख्यातेन सम्बन्धयितव्यः। सः अस्मभ्यमदात्। किम्। हिरण्यरथं हिरण्मयं रथम्। कीदृशः। दंसनावान्। 'दंसि दंशदर्शनयोः'। दर्शनीयत्वाद् दंसना वाग् रूपं वा। अथवा दंसो दंसय(ती)ति (नाम कर्म? कर्मनामसु) दर्शनाव तदेकदेशदंस्यनुगतो दंसनाशब्दोऽपि कर्मनामैव। वाग्मी रूपवान् कर्मवान् वेत्यर्थः। किञ्च स नः सनिता स एवास्माकं सर्वविधुरेषु सम्भक्ता। सनये स नः। सनिर्लाभः। जीवितस्य लाभाय स एवास्माकम्। जीवितमपि स एव दास्यतीत्यर्थः॥ १६॥

वेङ्कटमाधवीयम्।

शश्वदिन्द्रः। इन्द्रेण दत्त हिरण्यरथं प्रतिगृह्णन् स स्तौति। अोप्रव्यापारं कुर्वद्भिरत्यन्तं श्वसद्भिरत्यन्तं हेषद्भिरेतैरश्वैरिन्द्रः शश्वज्जिगाय शत्रुधनानि। सोऽस्मभ्यं कर्मवान् ददातु हिरण्यरथम्। स ह्यस्माकं धनस्य दाता। स एव नो ददात्विति॥ १६॥

"तमिन्द्र उवाचाश्विनौ नु स्तुहि। अथ त्वोत्स्रक्ष्याम इति। सोऽश्विनौ तुष्टावात उत्तरेण तृचेन।"

आश्विनावश्वावत्येषा यातं शवीरया।
गोमद्दस्रा हिरण्यवत्॥ १७॥

आ। अश्विना। अश्वऽवत्या। इषा। यातम्। शवीरया। गोऽमत्। दस्रा। हिरण्यऽवत्॥ १७॥

स्कन्दस्वामीयम्।

आ इत्युपसर्गो यातमित्याख्यातेन सम्बन्धयितव्यः। हे अश्विनौ। अश्ववत्या इषा। 'इत्थम्भूतलक्षणेʼ(२. ३. २१) इत्येवमेषा तृतीया। अश्ववता-

१. 'द्भिरिʼ, २. 'त्। किʼ, ३. 'दंʼ, ४ 'दर्शदʼ, ५. 'नौ स्तʼ क. ख. पाठः.

नेन सम्बद्धौ । आयातम् आगच्छतम् । यदस्मभ्यमर्घ्यम् अन्नं च दातव्यं, तद् गृहीत्वागच्छतमित्यर्थः । शवीरया । तृतीयान्तमेतत्, नाश्विनोः सम्बोधनं, अनुदात्तत्वाप्रसङ्गाय । शु इति क्षिप्रनाम । 'ईर गतौ' । क्षिप्रगतिः शवीरा । शवेर्गतिकर्मण एतत् । शविर्वेगः, तद्वती शवीरा, तया वेगवत्या गत्येत्यर्थः । कथं च पुनरायातम् । गोमत् गोसंयुक्तम् । गा अपि गृहीत्वेत्यर्थः । हे दस्रा! शत्रुपक्षक्षयकरौ! दस्रनामानौ! । यद्यपि चाश्विनोरेको दस्रनामा, तथापि साहचर्यादुभयोर्व्यपदेशः । हिरण्यवत् हिरण्यसंयुक्तं च । हिरण्यं च गृहीत्वेत्यर्थः ॥ १७ ॥

वेङ्कटमाधवीयम् ।

अश्विनौ । आयातमश्विनावश्वयुक्तेनान्नेन क्षिप्रप्रेरणेन गोयुक्तं दर्शनीयौ! हिरण्ययुक्तं च ॥ १७ ॥

समानयोजनोहिवांरथोदस्रावमर्त्यः ।
समुद्रेअश्विनेयते ॥ १८ ॥

समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ॥ १८ ॥

स्कन्दस्वामीयम् ।

समानः साधारणः द्वयोरप्येक एव यो युज्यते स समानयोजनः । हिशब्दस्तु पदपूरणः । वां युवयोः रथः हे दस्रौ! अमर्त्यः मरणवर्जितः, अविनाशीत्यर्थः । समुद्रे । अन्तरिक्षनामैतत् । निरालम्बनेऽप्यन्तरिक्षे । हे अश्विना! ईयते गच्छति ॥ १८ ॥

वेङ्कटमाधवीयम् ।

समानयोजनः । युवयोर्हि रथो द्वयोरप्येकभूतो दर्शनीयावमरणोऽन्तरिक्षमध्ये गच्छति । तत आयातमिति ॥ १८ ॥

न्यंघ्न्यस्यमूर्धनिचक्रंरथस्ययेमथुः ।
परिद्यामन्यदीयते ॥ १९ ॥

१. 'श्विना अ' क ख. पाठः.

नि। अघ्न्यस्य। मूर्धनि। चक्रम्। रथस्य। येमथुः। परि। द्याम्। अन्यत्। ईयते ॥ १९ ॥

स्कन्दस्वामीयम्।

नीत्युपसर्गो येमथुरित्याख्यातेन सम्बन्धयितव्यः। अघ्न्यः अहन्तव्यत्वात् प्रजापतिरादित्यो वा। तस्य मूर्धनि एकं चक्रं स्वरथस्य नियेमथु. नियमितवन्तौ स्थः। परि द्याम्। परिशब्दो लक्षणया कर्मप्रवचनीयः प्रतिशब्देन समानार्थः। दिवं प्रति अन्यद् द्वितीयम् ईयते गच्छति। नेमिचक्रस्य चित्रथस्य सामर्थ्यमित्यर्थः ॥ १९ ॥

वेङ्कटमाधवीयम्।

अघ्न्यस्य। अश्विनावेकं चक्रं रथस्य पर्वतमूर्ध्नि स्थापयामासतुः। अन्यत् तु चक्रं परितो दिवं गच्छति ॥ १९ ॥

"तमश्विनावूचतुः उपसं[1] तु स्तुहि। अथ त्वोत्स्रक्ष्याम इति। स उपसं तुष्टावात उत्तरेण तृचेन।"

कस्तउषःकधप्रियेभुजेमर्तोअमर्त्ये।
कंनक्षसेविभावरि ॥ २० ॥

कः। ते। उषः। कधऽप्रिये। भुजे। मर्तः। अमर्त्ये। कम्। नक्षसे। विभाऽवरि ॥ २० ॥

स्कन्दस्वामीयम्।

उषस्यस्तृच उत्तरः। उत्तरस्तृच उषोदेवतः। हे उषः! कधप्रिये!। कमुदकं तद्रश्मिभिराहितं, यो दधाति धारयति, कधः प्रजापतिः। केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यत इति वा कधः। कोऽसौ। आदित्यः। तस्य प्रिया, स वा प्रियो यस्याः सा कधप्रिया। अत्यन्तसाहचर्याच्च तत्प्रियत्वाद् (व्यसानः? वा सा। तत्) सम्बोधनं हे कधप्रिये!। भुजे। भुजिरत्र पालनार्थः। पालनाय। (कः) मर्तः मनुष्यः। अमर्त्ये! मरणवर्जिते!। कं त्वं मनुष्यं पालयसीत्यर्थः। कं वा नक्षसे। (व्युक्षवद्धन्ति?) नक्ष इति व्याप्तिकर्मसु

1. 'सं स्तु' क. ख. पाठः.

नेन सम्बद्धौ । आयातम् आगच्छतम् । यदस्मभ्यमर्थम् अन्नं च दातव्यं, तद् गृहीत्वागच्छतमित्यर्थ । शवीरया । तृतीयान्तमेतद्, नाश्विनो. सम्बोधनं, अनुदात्तत्वाप्रसङ्गाय । शु इति क्षिप्रनाम । 'ईर गतौ' । क्षिप्रगतिः शवीरा । शवेर्गतिकर्मण एतद् । शविर्वेग', तद्वती शवीरा, तया वेगवत्या गत्येत्यर्थः । कथं च पुनरायातम् । गोमत् गोसंयुक्तम् । गा अपि गृहीत्वेत्यर्थः । हे दस्रा! शत्रुपक्षक्षयकरौ! दस्रनामानौ! । यद्यपि चाश्विनोरेको दस्रनामा, तथापि साहचर्यादुभयोर्व्यपदेश । हिरण्यवत् हिरण्यसंयुक्तं च । हिरण्य च गृहीत्वेत्यर्थः ॥ १७ ॥

वेङ्कटमाधवीयम् ।

अश्विनौ । आयातमश्विनावश्वयुक्तेनाश्वेन क्षिप्रप्रेरणेन गोयुक्तं दर्शनीयौ! हिरण्ययुक्तं च ॥ १७ ॥

समानयोजनोहिवांरथोदस्रावमर्त्यः ।
समुद्रेअश्विनेयते ॥ १८ ॥

समानऽयोजनः । हि । वाम् । रथः । दस्रौ । अमर्त्यः । समुद्रे । अश्विना । ईयते ॥ १८ ॥

स्कन्दस्वामीयम् ।

समान साधारण. द्वयोरप्येक एव यो युज्यते स समानयोजनः । हिशब्दस्तु पदपूरण । वा युवयो रथ हे दस्रौ! अमर्त्य. मरणवर्जितः, अविनाशीत्यर्थ । समुद्रे । अन्तरिक्षनामैतत् । निरालम्बनेऽप्यन्तरिक्षे । हे अश्विना! ईयते गच्छति ॥ १८ ॥

वेङ्कटमाधवीयम् ।

समानयोजन । युवयोर्हि रथो द्वयोरप्येकभूतो दर्शनीयावमरणोऽन्तरिक्षमध्ये गच्छति । तत आयातमिति ॥ १८ ॥

न्य१घ्न्यस्यमूर्धनिचक्रंरथस्ययेमथुः ।
परिद्यामन्यदीयते ॥ १९ ॥

---

१. 'श्विना अ' क ख. पाठः.

नि । अघ्न्यस्य । मूर्धनि । चक्रम् । रथस्य । येमथुः । परि । द्याम् । अन्यत् । ईयते ॥ १९ ॥

## स्कन्दस्वामीयम् ।

नीत्युपसर्गो येमथुरित्याख्यातेन सम्बन्धयितव्यः । अघ्न्यः अहन्तव्यत्वात् प्रजापतिरादित्यो वा । तस्य मूर्धनि एकं चक्रं स्वरथस्य नियेमथु नियमितवन्तौ स्वः । परि द्याम् । परिशब्दो लक्षणया कर्मप्रवचनीयः प्रतिशब्देन समानार्थः । दिवं प्रति अन्यद् द्वितीयम् ईयते गच्छति । नेमिचक्रस्य विद्रथस्य सामर्थ्यमित्यर्थः ॥ १९ ॥

## वेङ्कटमाधवीयम् ।

अघ्न्यस्य । अश्विनावेकं चक्रं रथस्य पर्वतमूर्ध्नि स्थापयामासतुः । अन्यत् तु चक्रं परितो दिवं गच्छति ॥ १९ ॥

"तमश्विनावूचतुः उपसं[1] नु स्तुहि । अथ त्वोत्स्रक्ष्याम इति । स उपसं तुष्टाव उत्तरेण तृचेन ।"

कस्तउषःकधप्रियेभुजेमर्तोअमर्त्ये ।
कंनक्षसेविभावरि ॥ २० ॥

कः । ते । उषः । कधऽप्रिये । भुजे । मर्तः । अमर्त्ये । कम् । नक्षसे । विभाऽवरि ॥ २० ॥

## स्कन्दस्वामीयम् ।

उषस्यस्तृच उत्तरः । उत्तरस्तृच उषोदेवतः । हे उषः । कधप्रिये । । कमुदकं तद्रश्मिभिराहितं, यो दधाति धारयति, कधः प्रजापतिः । केन विधीयते प्रकाशनरसाद्याहरणार्थं स्थाप्यत इति वा कधः । कोऽसौ । आदित्यः । तस्य प्रिया, स वा प्रियो यस्याः सा कधप्रिया । अत्यन्तसाहचर्याच्च तत्प्रियत्वाद् (व्यसानः? वा सा । तद्) सम्बोधनं हे कधप्रिये । । भुजे । भुजिरत्र पालनार्थः । पालनाय । (कः) मर्तः मनुष्यः । अमर्त्ये ! मरणवर्जिते । । कं त्वं मनुष्यं पालयसीत्यर्थः । कं वा नक्षसे । (बउक्षवद्धन्ति ?) नक्ष इति व्याप्तिकर्मसु

---

1. 'सं रु नु' क. ख. पाठः.

पाठाद् नक्षतिर्व्याप्त्यर्थ । आयुरादिप्रदानेन व्याप्नोषीत्यर्थ । अथवा 'णक्ष णक्ष गतौ ।' (ग)त्यर्थो नक्षति । क वा पालयितु गच्छसीत्यर्थ । कथयेतत् सुख ज्ञात्वा वयमपि तादृशा एव भवेम इत्यर्थ । (विभावरि) विविधा भा दीप्ति- र्विभा तद्वती । ईपसिपोश्छन्दसि वनिर्मत्वर्थीय ॥ २० ॥

वेङ्कटमाधवीयम् ।

कस्त उप । कस्त उप 'कथाप्रिये'। धकारधकारौ समानौ । भोगाय भवति मर्त मरणधर्म(त ?से)। कीदृश च त्व व्याप्नोषि दीप्तिमति' ॥ २० ॥

वयंहिते॑अम॑न्मह्यान्तादाप॑रा॒कात् ।
अश्वे॒नचि॑त्रेअरुषि ॥ २१ ॥

वयम् । हि । ते । अमन्महि । आ । अन्तात् । आ । पराकात् ।
अश्वे । न । चित्रे । अरुषि ॥ २१ ॥

स्कन्दस्वामीयम् ।

हिशब्द पदपूरण । ते इति द्वितीयार्थे षष्ठी । वय त्वाम् । अमन्महि । ईमहे यामि मन्मह इति याच्ञाकर्मसु पाठाद् याच्ञार्थोऽयम् । याचामहे । किम् । सामर्थ्यात् स्वस्यायुप । न चाल्पस्य, किं तर्हि । (आ अन्तात्) । आ पराकात् । पराक इति दूरनाम । विप्रकृष्टत्वाच्च पुरुषायुष वर्षशतमत्र दूरमभिप्रेतम् । आ अभिविधौ मर्यादायाम् । आ वर्षशतात् । यावद्वर्षशत पूर्णमित्यर्थ । अश्वे न चित्रे । अश्वा बडवा । सा यथा चित्रा विचित्रा पूज्या वा तद्वच्चित्रे । अथवा श्रूयमाणोपमार्थीयानमुपमानशब्द (?) । सदृशे व्याप्ते वा । चित्रे चित्ररूपे पूज्ये वा । अरुषि । (रुशतानामुपमानश्रुतिस्तदुपमेयविषयसम्बोधनसम्बन्धसम्भ- वादश्वशब्दो नोपमानवृत्ति । किं तर्हि । लुप्तोपम उपमेयवृत्ति । क्रियाशब्दो वा । नशब्दस्तूपरिष्टादुपचार उपमार्थीयत्वादस्युपमार्थस्य सम्पत्त्यर्थ प्रयोग इति पदपूरण । अश्वे बडवासदृशे । व्याप्ते । वा चित्रे । चित्ररूपे । पूज्ये । वा । अ- रुषि । । रुशते चोपतेर्वा गतिकर्मणो गन्तृवचन ¹) । दीप्ते । गन्त्रि । वा ॥ २१ ॥

वेङ्कटमाधवीयम् ।

वय हि ते । वय हि त्वामज्ञासिष्मान्तादा च पराकात् । पराकशब्दो दूरवचनः । मूलादुपकम्यान्तादित्यर्थ । अश्वे 'गमनशील' पूज्ये । आरोचन' इति । नकार स- म्प्रत्यर्थीयः ॥ २१ ॥

---

१. 'घा' क ख पाठ

त्वंत्येभिरागहिवाजेभिर्दुहितर्दिवः ।
अस्मेरयिंनिधारय ॥ २२ ॥

त्वम् । त्येभिः । आ । गहि । वाजेभिः । दुहितः । दिवः ।
अस्मे इति । रयिम् । नि । धारय ॥ २२ ॥

स्कन्दस्वामीयम् ।

त्येभिरितीत्थंभूतलक्षणे तृतीया । तच्छब्दश्रुतेर्योग्यार्थसम्बन्धो यच्छब्दोऽध्याहार्यः । यानि वयमर्थयामहे, तैः सम्बद्धा । आगहि आगच्छ । वाजेभिः अन्नैः । यान्यस्मभ्यं दातव्यानि अन्नानि, तानि गृहीत्वागच्छेत्यर्थः । हे दुहितर्दिवः । आदित्यतेजसो दिवि जायमानत्वादुषा दिवो दुहिता, तेनैवमामन्त्र्यते हे दुहितर्दिव इति । किञ्च अस्मे रयिं निधारय । धनं चास्मभ्यं देहीत्यर्थः । स च शुनःशेपोऽस्यामृच्युक्तायां विपाशो मुमुचे[1] इतीतिहासार्थः ॥ २२ ॥

वेङ्कटमाधवीयम् ।

त्वन्त्येभिः । त्वमेतैः प्रादिशितैरन्नैरागच्छ दिवो दुहितरस्मासु रयिं नियच्छेति ॥ २२ ॥

इति प्रथमस्य द्वितीये एकत्रिंशो वर्गः ॥

इति प्रथमे मण्डले षष्ठोऽनुवाकः ॥

---

त्वमग्नेप्रथमोअङ्गिराऋषिर्देवोदेवानामभवःशिवःसखा ।
तवव्रतेकवयोविद्मनापसोजायन्तमरुतोभ्राजदृष्टयः ॥१॥

त्वम् । अग्ने । प्रथमः । अङ्गिराः । ऋषिः । देवः । देवानाम् ।
अभवः । शिवः । सखा । तव । व्रते । कवयः । विद्मनाऽअपसः ।
अजायन्त । मरुतः । भ्राजत्ऽऋष्टयः ॥ १ ॥

---

१. 'चे मुक्तवानिती' क. ख. पाठः.

## स्कन्दस्वामीयम् ।

हिरण्यस्तूप आङ्गिरसस्त्वम् । हिरण्यस्तूपो नामाङ्गिरसः पुत्रस्त्वमग्न इत्यादि दृष्टवान् । आग्नेयं प्रथमं सूक्तम् । हिरण्यस्तूपस्य प्रथमं सूक्तमग्निदेवतम् । त्वं हे अग्ने ! प्रथमः सर्वत उत्कृष्टः । अङ्गिराः । अङ्गानि शरीरावयवाः, तद्वदङ्गि शरीरं, तत्र स्थितिहेतुरशितपीतरसोऽङ्गिरसः । तं करोत्यङ्गिर(स)यति । 'तत् करोति तदाचष्ट' इति णिच् । तदन्तात् क्विप् । 'अत्वसन्तस्य चाधातोः' (६. ४. १४)इति दीर्घत्वम् । अधातुभूतपूर्वमात्रस्य हीदमिष्यते । गोमान् यवमानिति यथा । दिवोदासादित्वाच्च छान्दसमाद्युदात्तत्वम् । अङ्गिराः शरीरस्थितिहेतोरशितपीतरसकर्त्तेत्यर्थः । जाठरो ह्यग्निरन्नं रसीकरोति । रसो लोहितमांसस्नाय्वस्थिमज्जाशुक्रभावेन परिणममानः शरीरस्थितिहेतुर्भवति । ऋषिर्द्रष्टा च सर्वस्य । अथवा योऽयं प्रथमोऽङ्गिरा नाम ऋषिः, स त्वमेव, त्वत्कारणत्वात् । तथाह्यैतिहासिका आहुः— "तातार्चिषि भृगुर्जज्ञे अङ्गारेष्वङ्गिरा ऋषिरि"ति । किञ्च देवः त्वं हविर्नयनाद्युपकारेण देवानाम् अभवः भवसि । शिवः सुखः । सखा । किञ्च तव (व्रते) । व्रतमिति कर्मनाम । सप्तमीनिर्देशादवस्थिता इति वाक्यशेषः । तव कर्मणि परिचर्यायामवस्थिताः । कवयः मेधाविनः । विद्मनापसः विदितयागादिकर्माणो वेदितव्यकर्माणो वा । उत्कृष्टचेष्टिता इत्यर्थः । अजायन्त मरुतः देवाः । कीदृशाः । भ्राजदृष्टयः । ऋष्टिः शस्त्राख्य आयुधविशेषः । दीप्तशस्त्रयः । देवत्वं हि धर्मायत्तम् । धर्मश्चाग्निपरिचर्यायत्तः । अथात एवमुच्यते तव व्रते अजायन्त मरुत इति । केचित्तु मरुत इत्यृत्विङ्नामाचक्षते । अत्र चर्त्विक्ष्वेव वर्तते । सामर्थ्याच्चान्तर्णीतमत्वर्थः तद्वद्यजमानवचनः । अजायन्तेत्येतस्य विद्मनापस इत्येतेन सम्बध्यते । तव व्रते अवस्थिता ऋत्विजो यजमाना विद्मनापसो वेदितव्यकर्माण उत्कृष्टचेष्टिता अजायन्तेति । अत्र चेतिहासमाचक्षते—"त्रिशङ्कुर्नामैक्ष्वाको राजा वसिष्ठस्य याज्योऽभवत् । स वसिष्ठमब्रवीत् 'येनाहं क्रतुना सशरीरो दिवं यायां, तेन मां याजये'ति । तं वसिष्ठोऽब्रवीद् 'अशक्यमेतदि'ति । स किञ्चिदागतमन्युरेतदेव वसिष्ठपुत्रानब्रवीत् । त एनमब्रुवन् 'भगवान् मघ्रचो यजने किमर्थं वृक्षमुत्सृज्य शाखास्ववलम्बसे' इति । स तानब्रवीत् 'अशक्यमेतदिति भगव-

१. 'अमाने' क ख. पाठ..

ताहमुक्तः' इति। त एनं प्रत्यब्रुवन् "यत् तस्याशक्यं, कथं तदस्माकं शक्यं भविष्यती'ति। स तानब्रवीत् 'प्रत्याख्यातोऽस्मि गुरुणा गुरुपुत्रैश्च। अन्यां गतिं यास्यामी'ति। तं वासिष्ठपुत्रः शक्तिः क्रुद्धोऽशपत् — 'गुर्वतिक्रमाच्चण्डालो भवे'ति। स शापानन्तरमेव घोररूपश्चण्डालोऽभवत्। अथासौ पुत्रं राज्येऽभिषिच्य विश्वामित्राश्रमं गत्वा प्रोषितस्य तस्य भार्यां परिचरितवान्। अथागतो विश्वामित्रः स्वदारपरिचरणाहितकोपो यथावृत्तं तत्सर्वमुपलभ्य राजानमब्रवीत् — 'अहं त्वा तेन क्रतुना याजयिष्यामी'ति। येन सशरीरः स्वर्गं यास्यसी'त्युक्त्वा स्वयमेव सम्भारान् संभृत्य शिष्यानुवाच — 'आम-(न्त्रय?न्त्र्य)न्तामृषयः। यश्च यद् ब्रवीति, तत् सर्वं मह्यमाख्यायतामि'ति। त ऋषीनुपामन्त्रयन्त। उपामन्त्र्यमाणाश्च ऋषयोऽब्रुवन् 'आगमिष्याम' इति। वासिष्ठास्त्वब्रुवन् 'चण्डालो यत्र यजते, क्षत्रियो याजयति च, कथं तत्र देवताभिर्हवींषि ग्रहीष्यन्ते। कथं तत्रागच्छाम' इति। तत् सर्वं विश्वामित्राय तच्छिष्या आचक्षते। अथ सपुत्रवसिष्ठवर्जमागतेष्वृषिषु परिसमाप्त एव यज्ञे 'उत्पतेति विश्वामित्रस्त्रिशङ्कुमब्रवीत्। अथासावुत्पत्य त्रिदिवमगच्छत्। तं देवाः पातयितुमैच्छन्। अतः क्रुद्धो विश्वामित्रोऽन्यान् देवानसृजत्। अथैनं भीता देवा अब्रुवन् 'यथा भवानिच्छति, तथास्त्वि'ति। सोऽद्य त्रिशङ्कुरद्यापि दिवि रोचते।" तदेतदनेनार्धर्चेनोच्यते। ये भ्राजदृष्टयः क्षत्रियत्वाद् दीप्तशस्त्रायुधाः, ते तव मते अवस्थिताः मरुत ऋत्विजो विश्वामित्रादयः तद्वन्तो वा त्रिशङ्क्वादयो यजमानाः विद्मनापसः वेदितव्यकर्माणोऽत्यन्तोत्कृष्टसशरीरस्वर्गगमनादिकर्माणोऽजायन्तेति ॥ १ ॥

वेङ्कटमाधवीयम्।

त्वमग्ने। हिरण्यस्तूप आङ्गिरसः। त्वमग्ने। मुख्योऽङ्गिरसां चैकः सर्वस्य द्रष्टा देवानां देवत्वसम्भवः कर्मणः स्वदः। त्वं सर्वस्मै स्वयं मेधिरः कतिधा कल्पयेन। कर्मण्यासमयो यः प्रादुर्भवन्ति मरुतो दीप्तस्वायुधाः ॥ १ ॥

त्वम॑ग्नेप्रथ॒मोअङ्गि॑रस्तमःक॒विर्दे॒वाना॒परि॑भूषसिव्र॒तम् ।
वि॒भुर्विश्व॑स्मै॒भुव॑नाय॒मेधि॑रोद्विमा॒ताश॒युःक॑ति॒धाचि॑-
[दा॒यवे॑ ॥ २ ॥

१. 'ह', २. 'या या यां' क. ख. पाठः.

त्वम् । अग्ने । प्रथमः । अङ्गिरःऽतमः । कविः । देवानाम् । परि । भूषसि । व्रतम् । विऽभुः । विश्वस्मै । भुवनाय । मेधिरः । द्विऽमाता । शयुः । कतिधा चित् । आयवे ॥ २ ॥

स्कन्दस्वामीयम् ।

त्वं हे अग्ने ! प्रथम. अङ्गिरस्तम. शरीरस्थितिहेतोरशितपीतरसस्यातिशयेन कर्ता । ऋषिवचनेनाङ्गिर.शब्देनोत्पत्तिकारणम्[1] । कविर्मेधावी देवानां स्वभूतं परिभूषसि । परिपूर्वो भवति सर्वत्र परिग्रहे । परिगृह्णासि । व्रतं यागाख्यं कर्म । किञ्च विभुरीश्वरः । विश्वस्मै भुवनाय । तादर्थ्ये एषा चतुर्थी । सर्वस्य भूतजातस्यार्थाय । मेधिर यज्ञवान् । यज्ञस्य सम्पादयितेत्यर्थ. । द्वे द्यावापृथिव्यौ वा अरणी वा मातरौ यस्य स द्विमाता । शयुः । शयतिरत्र स्थानार्थः । आमाशयो जलाशय इति यथा । व्यवस्थातेत्यर्थ । कतिधाचित् कतिभिरपि प्रकारै. । कस्यार्थाय । आयवे । आयवो मनुष्याः । और्वशेयो वा पुरूरवस. पुत्र आयु' । तस्यार्थाय । कतिधा पुनर्व्यवस्थाता । उच्यते । अग्निहोत्रदर्शपूर्णमासादिपु तावदाहवनीयत्वात् त्रिधा । पिण्डपितृयज्ञचातुर्मास्येषु चतुर्धा प्रणीतातिरेकात् । पशौ पञ्चधा शामित्रातिरेकात् । सोम आग्नीध्रस्य धिष्ण्यातिरेकात् यावत्संख्यम् ॥ २ ॥

वेङ्कटमाधवीयम् ।

त्वमग्ने ! प्रथम । त्वमग्ने प्रथमोऽङ्गिरसां च ऋषिः कविर्यज्ञमलङ्करोषि सर्वस्मै भुवनायानेकशरीरो भवन् प्राज्ञो द्वयोर्लोकयोर्निर्माता पुरूरवस पुत्रायायवे गार्हपत्यादिव्यूहेनानेकधा शयान ॥ २ ॥

त्वमग्नेप्रथमोमातरिश्वनआविर्भवसुक्रतूयाविवस्वते ।
अरेजेतांरोदसीहोतृवूर्येसघ्नोर्भारमयजोमहोवसो ॥३॥

त्वम् । अग्ने । प्रथमः । मातरिश्वने । आविः । भव । सुक्रतुऽया । विवस्वते । अरेजेताम् । रोदसी इति । होतृऽवूर्ये । असघ्नोः । भारम् । अयजः । महः । वसो इति ॥ ३ ॥

---

1 'अङ्गिरस ऋषेरतिशयेनोत्प त्ति' ग. पाठः

## स्कन्दस्वामीयम्।

अत्रेतिहासमाचक्षते — सर्वमिदमन्धं तम आसीत्। अथ मातरिश्वा आकाशे सूक्ष्ममग्निमपश्यत्। तममथ्नादथर्वा च ऋषिः। तं पराशरो भरद्वाजश्च। वक्ष्यति 'मथीयदीं विष्टो मातरिश्वा', 'त्वामग्ने पुष्करादधी'ति। तत्र मथ्यमाने ज्वालमाली नामाग्निरजायत। स प्रथमं मातरिश्वन आविरभवत्। अथ विवस्वते। तदेतदिहोच्यते। त्वं हे अग्ने! प्रथमः अग्निमः। मातरिश्वने, मातरिश्वा वायुः, तस्मै। आविर्भव। लङर्थेऽयं लोट्। आविरभवः। प्रकाशीभूत इत्यर्थः। सुक्रतूया। शोभनं कर्म सुक्रतुः, तदिच्छा सुक्रतूया। तृतीयैकवचनस्यायादेशः। शोभनयागादिकर्मेच्छयेत्यर्थः। मातरिश्वने चाविर्भूय अनन्तरं विवस्वते आविरभवः। तत् किञ्च अरेजेताम्। भ्यसते रेजत इति भयवेपनयोः। अबिभीताम्। भयाद् वा अकम्पेताम्। रोदसी द्यावापृथिव्यौ। होतृवूर्ये। (वृ!वृ)तो वूर्यः। होता वूर्यश्चासौ होतृवूर्यः, तस्मिन्। होतरि वृते त्व(यि) होतृवूर्ये। यदा त्वं होता वृतो वेदिमध्यस्थोऽदीप्यथाः, तदायमतिदीप्तोऽप्यावां दहेदित्येवं द्यावापृथिव्यावप्य(बि)भीतां भयाद्वा अकम्पेताम्। किं पुनरन्य इत्यर्थः। असघ्नोः भारम्। अत्रेतिहासमाचक्षते — देवाः किल स्वयमेव स्वानि स्वानि हवींष्यूद्वाभक्षयन्। तेषां केचिद् वोढुं नाशक्नुवन्। एकैकाहुतिस्त्रैलोक्यभारादतिरिच्यते। कांश्चित्तु शक्नुवतोऽप्यसुरा अभ्यद्रवन्। ते सर्वेऽग्निमब्रुवन् 'हव्यं नो वहे'ति। स तल्लीलायमानोऽवहत्। तदेतदिहोच्यते — असघ्नोर्भारमिति। सघिर्हिंसार्थः। 'षघ वुहि हिंसाया-मि'ति। इह तु भारस्य हिंसाकर्मतासम्भवात् सघिः शक्नोत्यर्थे। सेहर्चा शक्नोत्यर्थस्येदं रूपं, न सघेः। शक्नोतेश्च नित्यकर्मभूतधात्वन्तरानुपपत्त्वाद् भारमिति च श्रुतेर्वोढुमिति वाक्यशेषः। आहुतिभारं वोढुमशक्नोरित्यर्थः। तेन चाहुतिभारेण अयजः। महः महतो देवान्। हे वसो! प्रशस्य! धनवन्! वा॥ ३

## वेङ्कटमाधवीयम्।

त्वमग्ने। त्वमग्ने! पु(रुणवो ! राणो) वायव आविरभवः शोभनकर्मेच्छया वस्वते यद्। तस्मै मातरिश्वा त्वामाजहार। त्वयि होतरि देवैर्वृते महान्तं त्वां दृष्ट्वा द्यावापृथिव्यावकम्पेताम्। त्वं देवानां हविर्वहनभारं सोढवान्। अयजश्च महतस्तान्[1] वासयितः!॥ ३॥

१. 'व्यापादो दहे' क. ख. पाठः.

त्वमग्ने मनवे द्यामवाशयः पुरूरवसे सुकृते सुकृत्तरः ।
श्वात्रेण यत्पित्रोर्मुच्यसे पर्या त्वा पूर्वमनयन्नापरं पुनः ॥ ४ ॥

त्वम् । अग्ने । मनवे । द्याम् । अवाशयः । पुरूरवसे । सुऽकृते । सुकृत्ऽतरः । श्वात्रेण । यत् । पित्रोः । मुच्यसे । परि । आ । त्वा । पूर्वम् । अनयन् । आ । अपरम् । पुनरिति ॥ ४ ॥

स्कन्दस्वामीयम् ।

अत्रेतिहासमाचक्षते — स्वर्गकामो मनुरग्निमयाचत । पुरूरवाश्चैल । ताभ्यामग्निः स्वर्गमददादिति । तदेतदिहोच्यते । त्वं हे अग्ने ! । मनवे । तृतीयार्थे चतुर्थ्येषा । मनुना राज्ञा । द्याम् अवाशय । 'वश कान्तौ' । द्युलोक कामितवान् । मनु राजानं दिवं कामयमानं तत्प्रापणेन प्रयुक्तवानित्यर्थः । न च केवलेन मनुना । किं तर्हि । पुरूरवसे सुकृते । इयमपि तृतीयार्थ एव चतुर्थी । पुरूरवसा च सुकृता शोभनानि कर्माणि कृतवता । सुकृत्तर शोभनकर्मकृत्तर । श्वात्रेण यत् । अत्रापीतिहासमाचक्षते — तयोर्ज्वालामालिनामाग्निः प्रथम मातरिश्वने आविरभवत् । ततो विवस्वते आविर्भूत । मातरिश्वा विवस्वत सकाशात् पृथिव्यामानयदिति । वक्ष्यति — 'आनुतो अग्निमि'ति । तदेतेनार्धर्चेनोच्यते — श्वात्रेण यत् पित्रोरिति । श्वात्रमिति क्षिप्रनाम । वायोरत्यन्तक्षिप्रत्वादिह मातरिश्वनि वर्तते । मातरिश्ववचन एव वा सामर्थ्यात् श्वात्रशब्द । तेन यत् त्वा पित्रोर्मुच्यसे परि । पितरावत्र द्यावापृथिव्यावभिप्रेते । मुच्यस इति लडर्थे लट् । परिशब्द उपरिभावे । द्यावापृथिव्योरुपर्यमुच्यथा । यद्यपि ज्वालामाली मातरिश्वना पृथिव्या एव केवलाया उपर्यमुच्यत, न दिव, तथापि साहचर्याद् यतरसम्बन्धिनो विमोचनस्याभे प्रति व्यपदेश । आ त्वा पूर्वमनयन् । आङत्र मर्यादायाम् । यदिति च यच्छब्दश्रुतेस्तच्छब्दोऽध्याहर्तव्य । तत प्रभृति मर्यादया त्वा पूर्वमाहवनीयात्मना नीतवन्त । के । सामर्थ्याद् यजमाना । आ अपर मर्यादयैव । अपर गार्हपत्यात्मना । पुन शब्दस्त्वत्रीकृतवीप्सार्थो द्रष्टव्य । पुन पुनस्तत्र कर्मणीत्यर्थ । यदापि विवस्वत सकाशाद् मातरिश्वा पृथिव्यामानयत्, तत प्रभृति त्वा यजमाना कर्मसु त्रेधा व्यभजन्निति समस्तार्थ ॥ ४ ॥

वेङ्कटमाधवीयम् ।

त्वमग्ने ! मनवे । त्वमग्ने ! कथमयं मनुरभ्युदयेन युक्तः स्यादिति तस्मै स्वर्गमकामयथाः । पुरूरवसे त्वं शोभनकर्मणः कर्ता सुकृत्तमः । क्षिप्रं मदारण्योस्त्वं परिमुच्यसे तदानीमेव त्वां पूर्वमनयन् । पुनरप्यावृत्ते कर्मणि अपरं च कुर्वन्ति 'अयं ते योनिर्ऋत्विय' इति ॥ ४ ॥

# त्वम॑ग्ने वृष॒भः पु॑ष्टि॒वर्ध॑न॒ उद्य॑तस्रुचे भवसि श्र॒वाय्यः॑ । य आहु॑तिं॒ परि॒ वेदा॒ वष॑ट्कृति॒मेका॑यु॒रग्रे॒ विश॑ आ॒विवा॑ससि ॥ ५ ॥

त्वम् । अ॒ग्ने॒ । वृ॒ष॒भः । पु॒ष्टि॒ऽवर्ध॑नः । उद्य॑तऽस्रुचे । भ॒व॒सि॒ । श्र॒वाय्यः॑ । यः । आऽहु॑तिम् । परि॑ । वेद॑ । वष॑ट्ऽकृतिम् । एक॑ऽआयुः । अग्रे॑ । विशः॑ । आ॒ऽविवा॑ससि ॥ ५ ॥

## स्कन्दस्वामीयम् ।

त्वं हे अग्ने ! वृषभः कामानां वर्षिता (दि ! दा)तेत्यर्थः । हविर्नयनद्वारेण वा वृष्टेरेव कर्ता । पुष्टिवर्धनः वर्धयिता पुष्टेः । उद्यतस्रुचे भवसि । यागार्थं नित्यमुद्यता स्रुग् यस्य स उद्यतस्रुक् । षष्ठ्यर्थे चात्र चतुर्थी । यष्टुः कामानां वृष्टेर्वा वर्षिता पुष्टेश्च वर्धयिता भवसीत्यर्थः । श्रवाय्यः श्रवणीयः । अत्यन्तोत्कृष्टगुणः । कीदृश उद्यतस्रुक् । उच्यते । यः आहुतिं वषट्कृतिं वषट्कारं च (परिवेद) । कर्मविधिज्ञ इत्यर्थः । एकायुरित्यादि । अत्रेतिहासः — और्वशेय आयुर्गन्धर्वलोकादग्निमाहृत्याधत्त । सोऽस्य प्रथमं देवविशः पर्यचरत् । ततोऽन्येषामिति । तदेतदुच्यते । एक आयुः प्रथममाहर्ता प्रेत्येकायु(ः) त्वम् । अग्ने प्रथमं देवविशः । (आविवाससि) पर्यचर(दि ! इ)त्यर्थः ॥ ५ ॥

वेङ्कटमाधवीयम् ।

त्वमग्ने ! वृषभः । त्वमग्ने ! कामानां वर्षिता पुष्टेर्वर्धको यजमानाय भवसि । श्रवणीयोऽग्निः स्वाहाकारहुतं वषट्कारहुतं च परितो लभते मनुष्येभ्य इति परोक्षः ।

---

१. 'धेते भ' क, 'धेते भ' ख. पाठ. २. 'यज्ञ आ', ३. 'सा' क. ख. पाठः. ४. 'नो' घ. पाठः. ५. '५' क. पाठः.

स त्वमग्ने! एकायुरविच्छिन्नायुरसृतोऽग्ने स्थित्वा मनुष्यान् परिचरसि। यद् वा बहूनां प्रकाशं कुर्वन्नेकयमनस्त्वं प्रचरसीति ॥ ५ ॥

इति प्रथमस्य द्वितीये द्वात्रिंशो वर्गः ॥

---

त्वम॑ग्नेवृजि॒नव॑र्तनिं॒नरं॒सक्म॑न्पिपर्षिवि॒दथे॑विचर्षणे ।
यःशूर॑साता॒परि॑तक्म्ये॒धने॑द॒भ्रेभि॑श्चि॒त्सम॑ृता॒हंसि॒भूय॑सः
[ ॥ ६ ॥

त्वम् । अ॒ग्ने॒ । वृ॒जि॒नऽव॑र्तनिम् । नर॑म् । सक्म॑न् । पि॒प॒र्षि॒ । वि॒दथे॑ । वि॒ऽच॒र्ष॒णे॒ । यः । शूर॑ऽसाता । परि॑ऽतक्म्ये । धने॑ । द॒भ्रेभिः॑ । चि॒त् । सम्ऽऋ॑ता । हंसि॑ । भूय॑सः ॥ ६ ॥

स्कन्दस्वामीयम् ।

त्वं हे अग्ने! वृजिनवर्तनिं (नरम्[१])। कुटिलवर्तनिम् । वर्तनिर्मार्गः । कुटिलमार्गम् । अन्यासु चेष्टासु सम्यक्चेष्टितमित्यर्थः । नरं मनुष्यम् । हे सक्मन्! 'षच सेवायाम्' । सेव्य! सेवितर्वा देवानाम्। पिपर्षि पालयसि। क्व। विदथे यज्ञे । हे विचर्षणे! विश्वद्रष्ट! । यस्त्वं कीदृक् । उच्यते । यः । शूरसाता। सङ्ग्रामनामैतत् । सङ्ग्रामे । परितक्म्ये धने। 'तकत्क्षयीयन्ती ति तकिर्गतिकर्मा । 'निमित्तात् कर्मसंयोगे' (वा० २-३-३६) इत्येव चैषा सप्तमी । 'चर्मणि द्वीपिनं हन्ती'ति यथा। परिगन्तव्ये धने निमित्ते। सङ्ग्रामे यत् प्राप्तव्यं धनं, तदर्थमित्यर्थः । दभ्रेभिश्चित् समृता । दभ्रशब्दोऽल्पनाम । समृतिः सङ्गतिः । अल्पैरपि शत्रुभिः सङ्गतौ । मयादसङ्गतान् दूरस्थानप्यन्यान् गत्वा गत्वा हंसि भूयसः शत्रून् । देवतामाहात्म्यान्मध्यमकर्मणेपाग्ने. स्तुतिः । मध्यम एवात्राग्निः ॥ ६ ॥

त्वमग्ने वृजिनवर्तनिम् । त्वमग्ने! युद्धेऽशोभनमार्गं नरं पारयसि। गृहे च विदथेयस्त्वं युद्धे परिगन्तव्ये सति धने क्षुद्रैरपि सङ्गतान् महतोऽपि स्तोतुः शत्रून् हंसि ॥ ६ ॥

---

१ 'परिचर' ख पाठः २. 'गं, ३ विद', ४ 'योऽद्द्वी' क ख पाठः ५ 'वा' ख पाठः

वेङ्कटमाधवीयम् ।

त्वंतमग्नेअमृतत्वउत्तमेमर्तंदधासिश्रवसेदिवेदिवे ।
यस्तातृपाणउभयायजन्मनेमयःकृणोषिप्रयआचसूरये ॥ ७ ॥

त्वम् । तम् । अग्ने । अमृतऽत्वे । उत्ऽतमे । मर्तम् । दधासि । श्रवसे । दिवेऽदिवे । यः । ततृपाणः । उभयाय । जन्मने । मयः । कृणोषि । प्रयः । आ । च । सूरये ॥ ७ ॥

स्कन्दस्वामीयम् ।

यस्तातृपाण इति श्रुतस्य यच्छब्दस्यामिनिर्देशार्थत्वात् त्वंसमानाधिकरणतच्छब्दश्रुतेश्च तद्विषयो योग्यार्थसम्बन्धो यच्छब्दोऽध्याहर्तव्यः । यस्त्वां परिचरति तं त्वं हे अग्ने! अमृतत्वे उत्तमे देवत्वे उत्कृष्टे मर्तं मनुष्यं दधासि स्थापयसि । नचामृतत्व एव । किं तर्हि । श्रवसे । श्रव इत्यन्ननाम वा कीर्तिपर्यायो वा । सप्तम्यर्थे चतुर्थी । अन्नादीनां चान्यत(मस्मिन्? मे)। नच कदाचित् । किं तर्हि । दिवेदिवे अहन्यहनि । सार्वकालमित्यर्थः । यस्त्वां परिचरति, तं देव! त्वं परलोके प्रापयसि देवत्वम्, इह लोकेऽपि सार्वकालमन्नादीनामन्यतम(दि? मि)त्यर्थः । अथवा श्रव इति कीर्तिपर्यायः । स्वार्थ एव च तादर्थ्ये चतुर्थी । (यस्त्वां परिचरति तं देवत्वं प्रापयसीत्यर्थः । किमर्थम् । श्रवसे दिवेदिवे!)। यस्यैवात्मनो वा कीर्त्यै सार्वकालमिति । (यागः? यः) कीदृशः । उच्यते । (ततृपाण.)स्तुतिहविस्तृष्णया बाध्यमानः । उभयाय जन्मने । सप्तम्यर्थे चतुर्थ्येषा । उभयस्मिन् जन्मनि, इह च परत्र च । मयः कृणोषि । मय इति सुखनाम । करोतिरपि सूरय इति सम्प्रदानचतुर्थीश्रुतेर्दानार्थः । सुखं ददासि । प्रय आ च । प्रय इत्यपठितमप्यन्ननाम । आङ् मर्यादायाम् । प्रवर्ग्यः प्रयःशब्दात् परो द्रष्टव्यः । अन्नं च मर्यादया । कस्मै । सूरये स्तोत्रे ॥ ७ ॥

वेङ्कटमाधवीयम् ।

१तं तमग्ने । त्वं तमग्ने! अमृतत्वे उत्कृष्टे मनुष्यं निदधासि दिवेदिवेऽन्नाय । यस्त्वं सूरेः स्वेतुरुभयविधाय[1] जन्मने तृप्यन्नुभयं करोषि सुखं चास्य भूयादन्नं चाऽस्त्वस्युभयोरुत्पत्तिमिच्छन्नुभयं करोषीति ॥ ७ ॥

---

1. 'म' ग. पाठः,

त्वंनोअग्नेसनयेधनानांयशसंकारुंकृणुहिस्तवानः ।
ऋध्यामकर्मापसानवेनदेवैर्द्यावापृथिवीप्रावतंनः ॥ ८ ॥

त्वम् । नः । अग्ने । सनये । धनानाम् । यशसम् । कारुम् । कृणुहि । स्तवानः । ऋध्याम । कर्म । अपसा । नवेन । देवैः । द्यावापृथिवी इति । प्र । अवतम् । नः ॥ ८ ॥

## स्कन्दस्वामीयम् ।

न इति द्वितीयैकवचनस्य स्थाने बहुवचनम् । त्व मा हे अग्ने! सनये लाभाय धनाना यशस कारुम् । यश इत्यन्ननाम । हविर्लक्षणेनान्नेन त(द्व१द्वन्त) स्तोतार च कृणुहि कुरु । नित्य यष्टार कुर्वित्यर्थ । स्तवान. स्तूयमान । अथवा न इति षष्ठी कारुमित्येतेन सम्बध्यते । यशसमित्यपि यश शब्द कीर्तिपर्याय । अस्माक सम्बन्धिनमन्तरात्मानं यजमान स्तोतार धनलाभार्थं यशस्विन कुरु स्तूयमान । किञ्च ऋध्याम त्वत्प्रसादादेववृद्धिं प्राप्नुयाम । किञ्चाग्निप्रसादादेव यागाख्य कर्मेद अपसा कर्मणा पालनाख्येन नवेन अन्यैरकृतपूर्वेण । देवै । सहयोगलक्षणैषा तृतीया । अन्यैरपि देवैः सह हे द्यावापृथिवी! प्रावत प्रकर्षेण अवत रक्षतम् । न अस्माक स्वभूतम् । अग्निप्रसादादेव युवामपि प्रावतमित्येव द्यावापृथिव्योर्गुणभावादेवाग्नेयत्वस्याविरोध ॥ ८ ॥

### वेङ्कटमाधवीयम् ।

त्वं नो अग्ने । त्वमग्नेऽस्माक (लेहा१लाभा)य धनाना यशस्विन स्तोतार पुत्रं कुरु स्तूयमान । प्राप्नुयाम वय कर्म यज्ञ नवन स्तुतिलक्षणेनानेन कर्मणा । स त्वमस्मान् स्तुतिप्रवृत्तान् देवै सह द्यावापृथिवी रक्षतम् ॥ ८ ॥

त्वंनोअग्नेपित्रोरुपस्थआदेवोदेवेष्वनवद्यजागृविः ।
तनूकृद्बोधिप्रमतिश्चकारवेत्वंकल्याणवसुविश्वमोपिपे
[॥ ९ ॥

१ 'मे भ' ग पाठ.

त्वम् । नः । अग्ने । पित्रोः । उपऽस्थे । आ । देवः । देवेषु । अनवद्य । जागृविः । तनूऽकृत् । बोधि । प्रऽमतिः । च । कारवे । त्वम् । कल्याण । वसु । विश्वम् । आ । ऊपिषे ॥ ९ ॥

स्कन्दस्वामीयम् ।

त्वं नः अस्माकं स्वभूते पित्रोरुपस्थे । पितरौ द्यावापृथिव्यौ । उपगम्य-स्त्विग्यजमानास्तिष्ठन्ति अस्मिन्, उपस्थीयन्ते वा देवता इत्युपस्थो यज्ञः । कः पुनर्द्यावापृथिव्योर्यज्ञेन सम्बन्धः । द्युस्थानां देवानामर्थाय पृथिव्यां यज्ञः क्रियते । कीदृशोऽहम् । उच्यते । देवो देवेषु । निर्धारण एषा सप्तमी । देवानां मध्ये दानादिगुणः । हे अनवद्य ! प्रशस्य ! जागृविः जागरणशीलश्च, सर्व-कार्येष्वप्रमादी चेत्यर्थः । देवेष्वित्येतज्जागृविरित्येतेन सम्बध्यते । देवेषु चा-प्रमादी देवांश्च यष्टुमुत्साहीत्यर्थः । तनूकृत् अशितपीतरसादिभावापादनेन शरी-राणां च कर्ता । प्रमतिश्च प्रकृष्टज्ञानश्च । किं करवाणि । उच्यते । बोधि बुध्यस्व । किम् । सामर्थ्यात् स्तुतीः । अस्मदीये द्युस्थानां देवानामर्थाय पृ-थिव्यां कृते यज्ञे स्तुतीः शृण्वित्यर्थः । किञ्च, कारवे स्तोत्रे त्वं हे कल्याण ! स्तोतृणामुपरि भद्र ! सानुग्रह ! कमनीय ! वा । वसु धनम् । विश्वम् । बहु-नामैतत् । बहु । ओपिषे । वपेरिदं रूपम् । आवपसि प्रक्षिपसि, ददासी-त्यर्थः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

त्वं नो अग्ने ! पित्रोः । त्वमस्माकमनवद्य ! द्यावापृथिव्योरुपस्थे वेद्यामासीद देवो देवानां मध्ये जागरणशीलः । स त्वं स्तोत्रेऽस्माकं कर्ता[1] भवासीति बुध्यस्व । मम च तस्मै प्रमतिः । त्वं हि विश्वं धनं कारव आवपसीति ॥ ९ ॥

त्वम॑ग्ने प्र॒मति॒स्त्वं पि॒तासि॑ न॒स्त्वं व॑य॒स्कृत्तव॑ जा॒मयो॑ व॒यम्। सं त्वा॒ राय॑: श॒तिन॒: सं स॑ह॒स्रिण॑: सु॒वीरं॑ यन्ति व्रत॒पाम॑दाभ्य ॥ १० ॥

१. 'तॄं ना भ' ख. पाठः.

त्वम् । अग्ने । प्रऽमतिः । त्वम् । पिता । असि । नः । त्वम् । वयःऽकृत् । तव । जामयः । वयम् । सम् । त्वा । रायः । शतिनः । सम् । सहस्रिणः । सुऽवीरम् । यन्ति । व्रतऽपाम् । अदाभ्य ॥ १० ॥

## स्कन्दस्वामीयम् ।

त्व हे अग्ने! प्रमति प्रकृष्टज्ञान । त्व पितासि न । न पितृकार्यकरत्वात् । अथवा पितृशब्दोऽय साक्षात् पारम्पर्येणेत्यस्य भेदस्यापि विवक्षितत्वात् पितामहे प्रयुक्त । त्व पितामहोऽस्माकमित्यर्थ । अग्ने पुत्रोऽङ्गिरा, अङ्गिरसो हिरण्यस्तूप । त्व वयस्कृत् पाकद्वारेणान्नाना कर्ता । दानार्थं वा करोति । स्तोतृभ्योऽन्नाना दातेत्यर्थ । तव जामय सजातीया वय, पौत्रत्वात् । किञ्च, स त्वा । समित्युपसर्गो यन्तीत्याख्यातेन सम्बन्धयितव्य । सयन्ति सम्यग् गच्छन्ति । त्वा तव त्वमृत मा प्र(त्य[1] ति)पद्यन्त इत्यर्थ । कानि । राय धनानि । कियन्ति । शतिन शतसङ्ख्यावन्ति । न च शतसङ्ख्यावन्त्येव केवलानि, सहस्रिण सहस्रसङ्ख्यावन्ति च सयन्ति । कीदृशम् । उच्यते । सुवीरम् । वीरो विक्रान्त, य सुष्ठु वीर, शोभना वा वीरा यस्य सम्बन्धिन । केन सम्बन्धेन । सामर्थ्यात् स्तोतृतया । स सुवीर, त सुवीरम् । व्रतपा कर्मणा पारयितारम् । हे अदाभ्य! अहिंस्य! ॥ १० ॥

## वेङ्कटमाधवीयम् ।

त्वमग्ने प्रमति । त्वमग्ने[2] प्रकृष्टमति । त्व पितेव च भवस्यस्माकम् । त्वमन्नस्य कर्ता । तव बान्धवा वयम् । सङ्गच्छन्ते त्वां शतसहस्रसंख्या राय शोभन वीर कर्मणो रक्षितारमदाभ्य! ॥ १० ॥

इति प्रथमस्य द्वितीये चयस्त्रिंशो वर्ग ॥

त्वाम॑ग्ने प्रथ॒मम॒ायुम॒ायवे॑ दे॒वा अ॑कृण्व॒न्नहु॑षस्य वि॒श्पति॑म् ।
इळा॑मकृण्व॒न्मनु॑षस्य॒ शास॑नीं पि॒तुर्यत्पु॒त्रो मम॑कस्य॒ जाय॑ते ॥ ११ ॥

त्वाम् । अग्ने । प्रथमम् । आयुम् । आयवे । देवाः । अकृण्वन् । नहुषस्य । विश्पतिम् । इळाम् । अकृण्वन् । मनुषस्य । शासनीम् । पितुः । यत् । पुत्रः । ममकस्य । जायते ॥ ११ ॥

---

१ या । प्र' क ख पाठ  २ 'ब भवो म ग पाठ

## स्कन्दस्वामीयम् ।

अत्रेतिहासमाचक्षते — उर्वश्यामुत्पन्नः पुरूरवसः पुत्र आयुर्नाम । तं कदाचिदसुरैरुपद्रूयमाणा देवा अब्रुवन् । जयैनानसुरानिति । सोऽब्रवीत् । सेनापतिर्मे युष्माकमेको भवत्विति । तस्य देवा अग्निं सेनापतिमकुर्वन् । तथा नहुषस्य । तदेतदनेनार्धर्चेनोच्यते । हे अग्ने ! त्वां प्रथममुत्कृष्टम् । क्रियाविशेषणं वा प्रथमशब्दः । प्रथममग्रे । आयुम् । एतेर्गत्यर्थस्येदं रूपम् । असुरान् प्रति गन्तारम् । आयवे । षष्ठ्यर्थे चतुर्थ्येषा । आयो राज्ञः । देवा अकृण्वन् कृतवन्तः । नहुषस्य विश्पतिं मनुष्यपतिमित्यर्थः । किंच, इळामकृण्वन् इति । अत्रापीतिहासः — मनुः प्रजाकामो नावाहुतिमजुहोत् । अग्निमैळारूपिणं कृत्वा प्रायच्छत् । एषा ते सर्वान् कामान् दास्यतीति । तां मनुरन्वशादिदमिदं च मे कुर्विति । सा तस्मै सर्वमक++++समैळं पुत्रमजनयदिति । तदेतदनेनार्धर्चेनोच्यते । त्वामेव इळाम् अकृण्वन् मनुष्यस्य शासनीं शासनीयां वशवर्तिनीमित्यर्थः । (य!क)दा पितुर्यत् यदा पुत्रः पुरूरवा नाम ममकस्य मामकस्य मदीयस्याग्नेरिळोया जायते । लङर्थेऽयं लट् । अजायत । इळाया अपि पुत्रः पुरूरवाः । इळारूपी चाग्निरेव । तेन योऽस्याः पुत्रः सोऽग्नेरेव पुत्रः । अग्निश्च हिरण्यस्तूपस्य पिता । पितृकार्यकरत्वात् पितामहो वा पितेति व्यपदिश्यत इति व्याख्यातम् । अत उपपन्नमेतत् । मदीयस्य पितुरग्नेरिळारूपिणो यदा पुत्रः पुरूरवा नामाग्नेरजायतेति ॥ ११ ॥

## वेङ्कटमाधवीयम् ।

त्वामग्ने ] । त्वामग्ने! पूर्वमायुमकृण्वन् आयवे मनुष्याय पुरूरवसे । पुरूरवसः पुत्र आयुः । तथा देवा अकृण्वन् नहुषस्य च राज्ञो विश्पतिं नाम पुत्रम् । तथा मनोश्च त्वामिळां नाम दुहितरमकृण्वन् । या जाता सती पितरं समुन्वशात् — यत्ते प्रयाजानुयाजयोर्मध्ये मामवकल्पय । मया सर्वानेव कामान् प्राप्स्यसीति । यदा ममकस्य पितुरङ्गिरसः पुत्रो जायते, तदानीं त्वं च त्वाम् कृण्वन्नङ्गिरसामेकमिति ॥ ११ ॥

त्वंनो॑अग्ने॒तव॑देवपा॒युभि॑र्म॒घोनो॑रक्षत॒न्व॑श्चवन्द्य ।
त्रा॒ता॒तो॒कस्य॒तन॑ये॒गवा॑म॒स्यानि॑मेषं॒रक्ष॑माण॒स्तव॑व्र॒ते ॥ १२ ॥

१. 'दास्य', २. 'जातः मनोवाहुतीम', ३. 'र', ४. 'जय', ५. 'व्या ज' क. ख. पाठः. १. 'स्व' ख. पाठः.

त्वम् । नः । अग्ने । तव । देव । पायुऽभिः । मघोनः । रक्ष । तन्वः । च । वन्द्य । त्राता । तोकस्य । तनये । गवाम् । असि । अनिऽमेषम् । रक्षमाणः । तव । व्रते ॥ १२ ॥

## स्कन्दस्वामीयम् ।

त्वं नः अस्मान् हे अग्ने! तव योग्यैः हे देव! पायुभिः पालनैः मघोनः मघवतः हविर्लक्षणेन धनेन धनवतः हविष्मतः सत इत्यर्थः, रक्ष त्रायस्व । न चास्मानेव केवलम् । तन्वश्च शरीराणि च । कस्य । सामर्थ्यादस्मत्पुत्रपौत्रस्य च । अस्मान् पुत्रान् पौत्रांश्चेत्यर्थः । हे वन्द्य! स्तुत्य! । किं कारणम् । उच्य(ते । त्रा)ता तोकस्य तनये । षष्ठ्यर्थे सप्तम्येषा । द्वयोश्चानयोरपौनरुक्त्यायापत्य(वरय? पत्य)नाम्नोः पुत्रविषयमेकं पौत्रविषयकमन्यत् । पुत्रस्य पौत्रस्य चेत्यर्थः* ॥ १२ ॥

## वेङ्कटमाधवीयम् ।

त्वं नो अग्ने । त्वमस्मानग्ने! तव देव! रक्षणैर्हविष्मतो रक्ष पुत्रांश्च । वन्द्य! त्वं हि पुत्रस्य पुत्रेऽपि गवां रक्षको भवसि । त्वदीये कर्मणि प्रवृत्तमनुमनवरतं रक्षमाण. ॥ १२ ॥

त्वमग्नेयज्यवेपायुरन्तरोनिषङ्गायचतुरक्षइध्यसे ।
योरातहव्योवृकायधायसेकीरेश्चिन्मन्त्रंमनसावनोषितम्
॥ १३ ॥

त्वम् । अग्ने । यज्यवे । पायुः । अन्तरः । अनिषङ्गाय । चतुःऽअक्षः । इध्यसे । यः । रातऽहव्यः । अवृकाय । धायसे । कीरेः । चित् । मन्त्रम् । मनसा । वनोषि । तम् ॥ १३ ॥

---

१. 'य' ख. पाठः.

---

* 'गवां च त्राता निमेषवर्जितं यत् तेन परिरक्षन् तव यागकर्मणि व्यवस्थितानां यजतां पुत्रपौत्राणां गवां च रक्षितासि त्वम् ।' इत्यधिकतया ग. ग्रन्थे दृश्यते ।

## स्कन्दस्वामीयम् ।

त्वं हे अग्ने । । यज्यवे । तादर्थ्ये एषा चतुर्थी । यष्टुरर्थाय । पायुः स्तोतॄणां यजमानानां च पालयिता । अन्तरः सन्निकृष्टश्च । ज्ञातिस्थानीयश्चेत्यर्थः । कीदृशाय यज्यवे । अनिपद्याय । न निपद्यतेऽन्यदेवतापरिचर्यायां कामभोगेषु वेत्यनिपद्यः, तस्मै । त्वत्स्तुतियागपराय, अभोगप्रधानाय वेत्यर्थः । किं करोषि । उच्यते । चतुरक्ष इध्यसे । चत्वार्यक्षीणि यस्य स चतुरक्षः । अक्षिभिश्चात्र (मुखानि) लक्ष्यन्ते । चतुर्मुखः । दिक्चतुष्टयाभिमुखो दीप्यसे । समन्ताद् यज्ञे दीप्यस इत्यर्थः । कीदृशो य(दा ? ज्युः) । उच्यते । यः रातहव्यः पूर्वमपि दत्तहविष्कः । कस्मै । अवृकाय । वृकशब्देनात्र हिंसमाणिवचनत्वाद्धिंसत्वं लक्ष्यते । अहिंसाय तुभ्यम् । अथवा 'वृक वृक आदान' इत्यस्यैतद्रूपम् । आदातव्यानामनादा(त्र ? त्रे) स्तोतॄणां यजमानानां च ये देव (हारयो ?) यद्दत्तं तस्याप्यनपहर्त्र इत्यर्थः । धायसे । 'धेट् पान' इत्यस्यैतद्रूपम् । आज्य(ते ?) सोमपयःप्रभृतीनां पात्रे । अथवा वृश्चतेः छेद(न ? नार्थे)स्य भावे वृकः । धायस इत्यपि पानवचनः । तेन च भोगो लक्ष्यते । तादर्थ्ये चोभयत्र चतुर्थी । अच्छिन्नाय पानायाप्यविच्छिन्नस्य भोगस्यार्थाय यो दत्तहविष्क इत्यर्थः । कीरेश्चित् । कीरिरिति स्तोतृनाम । चिच्छब्दोऽप्यर्थे । यो दातिश्चात्र यजते, स्तौत्येव केवलं, तस्यापि स्वभूतं स्तुतिलक्षणं मन्त्रं मनसा हृदयेन साद(र)एव भूत्वा त्वं वनोषि तम् । वनिरत्र याच्ञार्थः । सम्भक्त्यर्थे वा । तच्छब्दश्रुतेश्च यच्छब्दोऽध्याहार्यः । य. करोति, याचसे प्रार्थयसे तं, सम्भजसे वा तमित्यर्थः ॥ १३ ॥

## वेङ्कटमाधवीयम् ।

त्वमग्ने यज्यवे । त्वमग्ने! यजमानार्थं कर्मणोऽन्तरङ्गो रक्षको रक्षोभिरनिपद्याय सर्वतो ज्वालाभिः पश्यन् [1]यागमनन्यव्यापाराय समिध्यसे । यो दत्तहविष्को रक्षोवर्जिताय तस्मै प्री[2]णनाय सोमं पिबसि । यश्च तस्य स्तोतुर्मन्त्रस्तं च मनसा कामयसे ॥ १३ ॥

त्वमग्न उरुशंसाय वाघते स्पार्हं यद्रेक्णः परमं वनोषि तत् ।
आध्रस्य चित्प्रमतिरुच्यसे पिता प्र पाकं शास्सि प्र दिशो वि-
[दुष्टरः ॥ १४ ॥

---

१. 'ति पात स्तत्वत् स्तुतपाय अ' क. ख. पाठः.  २. 'प्रो' ख. पाठः.

त्वम् । अग्ने । उरुऽशंसाय । वाघते । स्पार्हम् । यत् । रेक्णः ।
परमम् । वनोषि । तत् । आध्रस्य । चित् । प्रऽमतिः । उच्यसे ।
पिता । प्र । पाकम् । शास्सि । प्र । दिशः । विदुःऽतरः ॥ १४ ॥

स्कन्दस्वामीयम् ।

त्वं हे अग्ने! उरुशंसाय । 'शंसु स्तुतौ' । बहुस्तुतये । कस्मै । वाघते । वाघत इत्यृत्विङ्नाम । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थः यजमाने वर्तते । ऋत्विग्वते यजमानाय । स्पार्हं स्पृहणीयमत्यन्तोत्कृष्टं यद्रेक्णः धनं परमं वनोषि तत् । परममिति क्रियाविशेषणं, न धनविशेषणं, स्पार्हमित्यनेन पौनरुक्त्यप्रसङ्गात् । वनोषीति वनिर्दानार्थः । 'वंस्वानोवार्याप्पुर्वि'ति यथा । सुष्ठु ददासि तदित्यर्थः । आध्रस्य चित् । आध्र आध्रव्याल्ल्दरिद्रः । चिच्छब्दोऽप्यर्थे । दरिद्रस्यापि यस्तु समर्थस्य प्रमतिरुच्यसे प्रकृष्टमतिरनुग्रहपर उच्यसे कथ्यसे त्वं जनैः । कीदृशः । पिता पितृसदृशः । पाकं शास्सि । पाकः अविपक्वप्रज्ञः परिपक्तव्यप्रज्ञत्वात् । तमपि प्रकर्षेणानुशास्सि । प्रज्ञामस्य जनयसीत्यर्थः । प्रदिशश्च प्रकर्षेणानुशास्सि । दिक्छब्देनात्र तन्निवासिभूतानि लक्ष्यन्ते । सर्वभूतान्यनुशास्सीत्यर्थः । विदुष्टरः विद्वत्तरः ॥ १४ ॥

वेङ्कटमाधवीयम् ।

त्वमग्न उरुशंसाय । त्वमग्ने! बहुस्तुतये यजमानाय स्पृहणीयं यद् धनमुत्तमं तत् प्रयच्छसि । तथा दानाधारभूतस्य दरिद्रस्य प्रमतिः पितोच्यसे । प्रशास्सि च विद्वत्तरस्त्वं बालमप्रज्ञमपि प्रदिशश्चतस्रो दिशः ॥ १४ ॥

त्वमग्ने प्रयतदक्षिणं नरं वर्मेव स्यूतं परि पासि विश्वतः ।
स्वादुक्षद्मा यो वसतौ स्योनकृज्जीवयाजं यजते सोपमा
[दिवः ॥ १५

त्वम् । अग्ने । प्रयतऽदक्षिणम् । नरम् । वर्मऽइव । स्यूतम् ।
परि । पासि । विश्वतः । स्वादुऽक्षद्मा । यः । वसतौ । स्योनऽकृत् ।
जीवऽयाजम् । यजते । सः । उपऽमा । दिवः ॥ १५ ॥

---

१. 'वंस्व', २ 'ते' ख. पाठ.

## स्कन्दस्वामीयम् ।

त्वं हे अग्ने ! प्रयतदक्षिणम् । प्रयच्छिर्दानार्थः । दत्तदक्षिणम् । अथवा 'यमु बन्धने' । प्रबद्धदक्षिणम् । सन्ततदक्षिणादानमित्यर्थः । नरं मनुष्यं वर्मेव स्यूतम् । वर्म कवचम् । यथा कवचमनुस्यूतं हृदयेऽवबद्धं योद्धारं परिपाति; तद्वत् परिपासि पालयसि । विश्वतः सर्वतः । स्वादुक्षद्मा । क्षद्मेत्यन्ननाम । स्वाद्वन्नः । यः वसतौ निवासे च स्योनकृत् सुखस्य कर्ता । कस्य । सामर्थ्यादतिथेः । अतिथिं स्वाद्वन्नं भोजयति, सुखाय च शय्यायां शाययतीत्यर्थः । यश्च जीवयाजम् । जीवो जन्तुः तेन यो यागः स जीवयागः । याज्ञीयपशुलक्षणेन जन्तुना यथेष्टं भवति तथा यो यजते इत्यर्थः । सोपमा दिवः । उपम इत्यन्तिकनाम । तात्स्थ्यात् ताच्छब्द्यम् । प्रथमैकवचनस्यायमाकारः । अन्तिकस्थः सन्निकृष्टो दिवः । स त्वत्प्रसादात् स्वर्गं प्राप्नोतीत्यर्थः । अथवा दिवः स्वर्गस्योपमा उपमानं स भवति । सर्वैः प्राणिभिर्मृष्टाहारसन्तुष्टैः स्वर्गोऽयमिति स्तूयत इत्यर्थः ॥ १५ ॥

### वेङ्कटमाधवीयम् ।

त्वमग्ने प्रयतदक्षिणम् । त्वमग्ने! दरिद्रेभ्यो दत्तधनं मनुष्यं कवचमिवो रसि वर्तमानेभ्यः सर्वेभ्यो दुरितेभ्यः परिरक्षसि । स्वादन्नो यो गृहे दरिद्राणां सुखकृज्जीवानामन्नमशनाद् यज्ञं करोति, स स्व(र्ग)स्योपमान्तिके वर्तते ॥ १५ ॥

इति प्रथमस्य द्वितीये चतुस्त्रिंशो वर्गः ॥

---

इमामग्नेशरणिंमीमृषोनइममध्वानंयमगामदूरात् ।
आपिःपिताप्रमतिःसोम्यानांभृमिरस्यृषिकृन्मर्त्यानाम्
[॥ १६ ॥

## स्कन्दस्वामीयम् ।

अत्रेतिहासः — हिरण्यस्तूपो यागायाग्निं विहत्य रक्षोभयाद् दूरं गत्वा, गतेषु रक्षस्सु प्रत्यागतः कृतापराधत्वाभिप्रायेणाग्निमाह — इमां हे अग्ने! शरणिम्। 'शृ हिंसायाम्'। आत्मनो हिंसां मीमृषः। 'मृषस्तितिक्षाया-मि'ति स्वार्थिको णिच्। लोडर्थे लुङ्। (मी)मृषः क्षमस्व। नः अस्माकम्। कतमा। उच्यते। इममध्वानं यमगाम। त्वां विहृत्यानिष्ट्वा रक्षोभयाद् गताः स्म दूराद् दूरम्। किं कारणम्। उच्यते। यस्मादापिः ज्ञातिः त्वम्। कीदृशः। पिता पितृस्थानीयः। प्रमतिः प्रकृष्टमतिः अनुग्रहपरः। केषाम्। (सोम्यानां) सोमसम्पादिनां सर्वयजमानानाम्। किञ्च, भ्रमिरसि लोकत्रयेऽपि भ्रमितासि। त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थः। तमोपघातद्वारेण च दर्शन-कृन्मनुष्याणाम्। अथवैवमन्यथास्या ऋचोऽर्थयोजना — इमां हे अग्ने! शरणिं संसारप्राप्तिलक्षणा हिंसां मीमृषो नः। मृजेरिदं जकारस्य षकारं कृत्वा छान्दसं रूपं, न मृषेः। मार्जय अपनयास्माकं संसाराध्वानमिमं, यमगाम प्राप्ताः स्म। दूरात् सृष्टेः प्रभृति। किं कारणम्। यस्मात् त्वमापिः पिता प्रमतिः सोम्यानां, यस्माच्च भ्रमिरसि। भ्राम्यतेर्ण्यन्तस्येदं रूपम्। भ्रमयितासि भ्रान्तेः कर्तासि। ऋषिकृत् दर्शनकृत् सम्यग्ज्ञानकरश्च मनुष्याणाम्। एत-दुक्तं भवति — भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्ता। तद्द्वारको च संसार-प्राप्तिमोक्षौ। त्वं च पितृवत् सर्वयजमानानामनुग्रहपरः। अतोऽस्मान् सम्य-ग्ज्ञानोत्पादनेन मोचयास्मात् संसारादिति ॥ १६ ॥

## वेङ्कटमाधवीयम् ।

इमामग्ने। अरण्ये तपोऽर्थं गतोऽग्निमाहास्ते। इमामग्ने! तपोजनितां[1] हिंसां फलप्रदानेनास्मान् यथा सहामहे तथा कुरु। सर्वममध्वानं च, यं वयं त्वां द्रष्टुकामा दूरादगाम। ज्ञातिः पालयिता प्रमतिश्च सोमार्हाणां भ्रमणशीलस्त्व-मन्धकाराप्रनग्नानां मनुष्याणां दर्शनकृत् ॥ १६ ॥

मनुष्वदग्ने अङ्गिरस्वदङ्गिरो ययातिवत्सदने पूर्ववच्छुचे ।
अच्छ याह्या वहा दैव्यं जनमा सादय बर्हिषि यक्षि च प्रियम्
[॥ १७ ॥

1. 'यद् व' ख. पाठः.

मनुष्वत् । अग्ने । अङ्गिरस्वत् । अङ्गिरः । ययातिऽवत् । सदने । पूर्वऽवत् । शुचे । अच्छ । याहि । आ । वह । दैव्यम् । जनम् । आ । सादय । बर्हिषि । यक्षि । च । प्रियम् ॥ १७ ॥

### स्कन्दस्वामीयम् ।

मनुष्वत् मनोरिव, हे अग्ने! अङ्गिरस्वत् अङ्गिरस इव, हे अङ्गिरः! ययातिवत् ययातेरिव, पूर्ववत् पूर्वेषामिव चर्षणीनां, (प्र ? म)गीाप सदने (सेद ?) शुचे! दीप्त! अच्छायाहि। अच्छाभेरर्थे । अभिगच्छ । अभिगम्य च आवह । दैव्यं जनं देवेषु भवं लोकं, सर्वदेवजनमित्यर्थः । आवाह्य च आसादय । अस्मदीये बर्हिषि यक्षि च । कीदृशम् । प्रियमिष्टमात्मना मत्वा ॥ १७ ॥

### वेङ्कटमाधवीयम् ।

मनुष्वदग्ने । अङ्गिरसामेकं मन्यावोनामिव ममापि गृहेऽग्रुनाभिमुखं याया-वह च दैव्यं जनमासादय च बर्हिषि यज च प्रियं देवगणम् ॥ १७ ॥

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा ।
उत प्रणेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या
[॥ १८ ॥

एतेन । अग्ने । ब्रह्मणा । वावृधस्व । शक्ती । वा । यत् । ते । चकृम । विदा । वा । उत । प्र । नेषि । अभि । वस्यः । अस्मान् । सम् । नः । सृज । सुऽमत्या । वाजऽवत्या ॥ १८ ॥

### स्कन्दस्वामीयम् ।

एतेन । हे अग्ने! स्तुतिलक्षणेन ब्रह्मणा वावृधस्व अत्यर्थं वर्धस्व। स्तूयमाना हि देवता वीर्येण वर्धते । अत एतदुच्यते एतेन ब्रह्मणात्यर्थं वर्ध-

## स्कन्दस्वामीयम् ।

अत्रेतिहास• — हिरण्यस्तूपो यागायाग्निं विहाय रक्षोभयाद् दूरं गत्वा गतेषु रक्षस्सु प्रत्यागत• कृतापराधत्वाभिप्रायेणाग्निमाह — इमां हे अग्ने! शरणिम् । 'शॄ हिंसायाम्' । आत्मनो हिंसां मीमृष । 'मृषस्तितिक्षाया-मि'ति स्वार्थिको णिच् । लोडर्थे लुङ् । (मी)मृष क्षमस्व । न अस्माकम् । कतमा,। उच्यते । इममध्वानं यमगाम । त्वां विहायानिष्ट्वा रक्षोभयाद् गता स्म दूराद् दूरम् । किं कारणम् । उच्यते । यस्मादापि• ज्ञातिः त्वम् । कीदृशः । पिता पितृस्थानीय• । प्रमतिः प्रकृष्टमतिः अनुग्रहपर । केषाम् । (सोम्याना) सोमसम्पादिना सर्वयजमानानाम् । किञ्च, भृमिरसि लोकत्रयेऽपि भ्रमितासि । त्रिष्वपि लोकेष्वप्रतिहतगतिरित्यर्थ । तमोपघातद्वारेण च दर्शनकृन्मनुष्याणाम् । अथवैवमन्यथास्या ऋचोऽर्थयोजना — इमां हे अग्ने! शरणिं ससारप्राप्तिलक्षणा हिंसां मीमृषो न• । मृजेरिदं जकारस्य षकार कृत्वा छान्दस रूप, न मृषे• । मार्जय अपनयास्माकं ससाराध्वानमिमं, यमगाम प्राप्ता स्म । दूरात् सृष्टेः प्रभृति । किं कारणम् । यस्मात् त्वमापि• पिता प्रमतिः सोम्याना, यस्माच्च भृमिरसि । भ्रम्यतेर्ण्यन्तस्येदं रूपम् । भ्रमयितासि भ्रान्ते• कर्तासि । ऋषिकृत् दर्शनकृत् सम्यग्ज्ञानकरश्च मनुष्याणाम् । एत-दुक्तं भवति — भ्रान्तेः सम्यग्ज्ञानस्य च त्वं कर्ता । तद्द्वारयो च ससार-प्राप्तिमोक्षौ । त्वं च पितृवत् सर्वयजमानानामनुग्रहपर । अतोऽस्मान् सम्य-ग्ज्ञानोत्पादनेन मोचयास्मात् ससारादिति ॥ १६ ॥

## वेङ्कटमाधवीयम् ।

इमामग्ने । अरण्ये तपोऽर्थं गतोऽग्निमाधास्ये । इमामग्ने[1] तपोजनितां हिंसां फलप्रदानेनास्मान् यथा सहामहे तथा कुरु । तयेममध्वानं च, यं वय त्वां द्रष्टुकामा दूरादगाम । ज्ञातिः पालयिता प्रमतिश्च सोमाहर्ता भ्रमणशीलस्त्वं तपःकारणं त्वमत्रान्मनुष्याणां दर्शनकृत् ॥ १६ ॥

मनुष्वदग्नेअङ्गिरस्वदङ्गिरोययातिवत्सदनेपूर्ववच्छुचे ।
अच्छयाह्यावहादैव्यंजनमासादयबर्हिषियक्षिचप्रियम्
[॥ १७ ॥

---

1. 'यद् द' च पाठ

मनुष्वत्। अग्ने। अङ्गिरस्वत्। अङ्गिरः। ययातिऽवत्। सदने। पूर्वऽवत्। शुचे। अच्छ। याहि। आ। वह। दैव्यम्। जनम्। आ। सादय। बर्हिषि। यक्षि। च। प्रियम्॥ १७॥

स्कन्दस्वामीयम्।

मनुष्वत् मनोरिव, हे अग्ने! अङ्गिरस्वत् अङ्गिरस इव, हे अङ्गिरः! ययातिवत् ययातेरिव, पूर्ववत् पूर्वेषामिव चर्षणीनां, (य ? म)गीय सदने (सेद ?) शुचे! दीप्त! अच्छायाहि। अच्छाभेरर्थे। अभिगच्छ। अभिगम्य च आवह। दैव्यं जनं देवेषु भवं लोकं, सर्वदेवजनमित्यर्थः। आवाह्य च आसादय। अस्मदीये बर्हिषि यक्षि च। कीदृशम्। प्रियमिष्टमात्मना मत्वा॥ १७॥

वेङ्कटमाधवीयम्।

मनुष्वदग्ने। अङ्गिरसामेकं मन्वादीनामिव ममापि गृहेऽधुनाभिमुखं याह्या-वह च दैव्यं जनमासादय च बर्हिषि यज च प्रियं देवगणम्॥ १७॥

एतेनाग्ने ब्रह्मणा वावृधस्व शक्ती वा यत्ते चकृमा विदा वा। उत प्रणेष्यभि वस्यो अस्मान्त्सं नः सृज सुमत्या वाजवत्या॥ १८॥

एतेन। अग्ने। ब्रह्मणा। ववृधस्व। शक्ती। वा। यत्। ते। चकृम। विदा। वा। उत। प्र। नेषि। अभि। वस्यः। अस्मान्। सम्। नः। सृज। सुऽमत्या। वाजऽवत्या॥ १८॥

स्कन्दस्वामीयम्।

एतेन। हे अग्ने! स्तुतिलक्षणेन ब्रह्मणा वावृधस्व अत्यर्थं वर्धस्व। स्तूयमाना हि देवता वीर्येण वर्धते। अत एतदुच्यते एतेन ब्रह्मणात्यर्थं वर्ध-

स्वेति। कतमेन? उच्यते। शक्ती वा। तृतीयैकवचनस्यायं पूर्वसवर्णः। शक्त्या वा। यत् ते चकृम विदा (वा) ज्ञानेन वा। यथाशक्ति यथाज्ञानं च यद् वयं (नच?) कृतवन्त इत्यर्थ। उत अपिच त्वमेव प्रणेष्य(सि? भि) अभिप्रणयासि। स्तुतिकरणे प्रवर्तयसीत्यर्थ। कीदृशः। वस्यः वसीयः वसुमत्तमः। कान्[1] अस्मान्। एतदुक्त भवति। त्वा स्तोतुं कुतो नः शक्ति ज्ञानं वा। त्वदनुग्रहादेव वयं तव स्तुतिं कृतवन्त न स्वमहिम्नेति। अथवा उतशब्द अभिप्रणेषीत्येनस्मात् परो द्रष्टव्य। ल्ट् च लोडर्थे। अभिप्रणेष्युत अभिप्रणयापि। एतेन ब्रह्मणात्यर्थं वर्धस्व प्रापयस्व चेत्यर्थ.। केम्। वस्यः। द्वितीयाबहुवचनमेव। वसूनि, धनानि चास्मभ्यं देहीत्यर्थ.। सं नः सृज संसृज न सम्बन्धय। अस्मान् सुमत्या शोभनया बुद्ध्या वाजवत्या अन्नसहितया। ज्ञानमन्नं च नो जनयेत्यर्थ ॥ १८ ॥

वेङ्कटमाधवीयम्।

एतेनाग्ने। एतेनाग्ने! स्तोत्रेण वृद्धो भव। यथा कश्चिच्छक्त्या महता प्रयत्नेन स्तोत्र करोति। तथा यत् ते चकृम विदा वा ज्ञानेन[2] वा यद् ब्रह्म वयं चकृम। अपिचास्मान् श्रेयसाभिप्रणय। अन्नवत्या त्वदीयया सुमत्या चास्मान् संसृजेति ॥ १८ ॥

इति प्रथमस्य द्वितीये पञ्चविंशो वर्गः ॥

---

इन्द्रस्य॒नुवी॒र्या॑णि॒प्रवो॑चं॒यानि॑च॒कार॑प्रथ॒मानि॑व॒ज्री।
अह॒न्नहि॒मन्व॒पस्त॑तर्द॒प्रव॒क्षणा॑अभिन॒त्पर्व॑तानाम् ॥ १ ॥

इन्द्र॑स्य। नु। वी॒र्या॑णि। प्र। वो॒च॒म्। यानि॑। च॒कार॑। प्र॒थ॒मानि॑। व॒ज्री। अह॑न्। अहि॑म्। अनु॑। अ॒पः। त॒त॒र्द॒। प्र। व॒क्षणाः॑। अ॒भि॒न॒त्। पर्व॑तानाम् ॥ १ ॥

---

१. 'का', २. 'न मावद्' ख. पाठः.

स्कन्दस्वामीयम् ।

द्वे ऐन्द्रे । एते सूक्ते इन्द्रदेवते । इन्द्रस्य, नु क्षिप्रं, वीर्याणि वीरकर्माणि, प्रवोचं ब्रवीमि । यानि चकार प्रथमानि अन्येन केनचिदप्यकृतपूर्वाणि अत्यन्तप्रकृष्टानि वा । वज्री वज्रवान्, सवज्र इत्यर्थः । कतमानि तानि । उच्यते । अहन् अहिं हतवान् मेघम् । अनु अपः ततर्द । अन्वित्यपरभावे । अपरभावः पश्चाद्भावः । तर्दतिर्हिंसार्थः । मेघवधोत्तरकालं तदीया अपो हिंसितवान् । भूमौ पातितवानित्यर्थः । सा हि तासां हिंसा । केचित्तु तर्दनं विस्तारणं व्याचक्षते । पृथिव्यामपो विस्तारितवानित्यर्थः । ताभिश्च पातिताभिर्विस्तारिताभिर्वा प्र वक्षणा अभिनत् । वक्ष(णमि ? णे)ति नदीनाम । नदीः प्रभिन्नवान् । बहूदकत्वाद् भित्त्वा स्वकूलानि सर्वतः प्रवाहितवानित्यर्थः । पर्वतानां महीधराणां सम्बन्धिनीः । कः पुनः पर्वतानां नदीनां च सम्बन्धः । प्रभवलक्ष(णः) । पर्वतेभ्यो हि नद्यः प्रभवन्ति । अथवा वक्षणाः पक्षा उच्यन्ते । पर्वतशब्दो हि मेघनाम । एकं मेघं हतवान् । अन्येषामपि पक्षान् हतवानित्यर्थः । अथवा पक्षवचनेन वक्षणाशब्देन तत्सामीप्यात् पक्षा अत्र प्रतिपाद्यन्ते । पर्वतशब्दस्तु महीधरवचनः । एवं महीधराणां पक्षान् प्राभिनच्छिन्नवानित्यर्थः । एवं हि चरकाध्वर्यूणां ब्राह्मण इतिहासः श्रूयते — प्रजापतेर्वा एतज्ज्येष्ठं तोकं यत् पर्वताः । ते पक्षिण आसन् । ते यत्र यत्राकामयन्त तत्परा वा समासत । अथ हवा इयं तर्हि शिथिलासीत् । तेषामिन्द्रः पक्षानच्छिनत् । तैरिमामदृंहदिति ॥ १ ॥

वेङ्कटमाधवीयम् ।

इन्द्रस्य नु । अथेन्द्रस्याहं क्षिप्रं वीर्याणि प्रवक्ष्यामि, यानि चकार पुरातनानि वज्री । तान्याह — अहिमसुरमहन्[1] । हत्वा च तेन रुद्धा अपः सूर्येव रश्मिभिस्ततर्द । प्राभिनच्च शिलोच्चयानां नदीः पृथिव्यां पातयितुम् ॥ १ ॥

अहन्नहिं पर्वते शिश्रियाणं त्वष्टास्मै वज्रं स्वर्यं ततक्ष ।
वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमव जग्मुरापः ॥ २ ॥

अहन् । अहिम् । पर्वते । शिश्रियाणम् । त्वष्टा । अस्मै । वज्रम् । स्वर्यम् । ततक्ष । वाश्राःऽइव । धेनवः । स्यन्दमानाः । अञ्जः । समुद्रम् । अव । जग्मुः । आपः ॥ २ ॥

1. 'यानदी' घ. पाठः,

## स्कन्दस्वामीयम् ।

अहन्नहिम् । पर्वते शिश्रियाणम् आश्रयन्तं लीयमानमित्यर्थः । मेघा हि स्वभावेन पर्वतेषु लीयन्ते । केनाहन् । उच्यते । त्वष्टा देवशिल्पी । अस्मै । तादर्थ्ये चतुर्थी । अस्येन्द्रस्यार्थाय । वज्रं स्वर्यम् । 'स्वर्य शब्दोपतापयोः ।' प्रहारवेलायां शब्दकरमुपतापयितारं वासुराणाम् । ततक्ष । तक्षतिः करोतिकर्मा । कृतवान् । अत्र चैकवाक्यताप्रसिद्ध्यर्थं यत्तच्छब्दावध्याहर्तव्यौ । यं त्वष्टास्मै वज्रं स्वर्यं ततक्ष, तेनाहन्निति । योग्यत्वसन्निधानाभ्यां वज्रस्य करणत्वप्रतीतिः, 'प्रहर शीघ्रमयं दण्ड' इत्यादिषु यथा । हते चाहौ वाश्रा इव धेनवः यथा वाशनशीला (अ)भिनवप्रसूता वत्सान् प्रति गच्छेयुः, एवं स्यन्दमानाः स्रवन्त्यः । अञ्जः । ऋजुपर्यायोऽयम् । क्रियाविशेषणं चेदम् । तृतीयार्थे वा प्रथमा । ऋजुना वा मार्गेण । समुद्रम् । अन्तरिक्षनामैतत् । पञ्चम्यर्थे चात्र द्वितीया । समुद्रादन्तरिक्षात् अव भूमिं प्रति । जग्मुः गता आपः । अथवा समुद्रमिति पार्थिव एव समुद्रोऽभिप्रेतः । स्वार्थ एव द्वितीया । हतेऽहौ तस्याधः पार्थिवं समुद्रं प्रति जग्मुराप इति ॥ २ ॥

### वेङ्कटमाधवीयम् ।

अहन्नहिम् । अहन्नहिं महीधरे लीयमानं त्वष्टास्मै वज्रं स्वकरणशीलमकरोत् तीक्ष्णधारम् । शब्दकारिण्यो[1]ऽभिनवप्र(सूरि[2]सू)ता इव धेनवो वत्सान् प्रति स्यन्दमाना अञ्जसा अन्तरिक्षं प्रत्यवगता आपो यद्वोदधिं प्रतिगता इति ॥ २ ॥

**वृषायमाणोऽवृणीत सोमं त्रिकद्रुकेष्वपिबत्सुतस्य ।**
**आ सायकं मघवादत्त वज्रमहन्नेनं प्रथमजामहीनाम् ॥ ३ ॥**

वृषऽयमाणः । अवृणीत । सोमम् । त्रिऽकद्रुकेषु । अपिबत् । सुतस्य । आ । सायकम् । मघऽवा । अदत्त । वज्रम् । अहन् । एनम् । प्रथमऽजाम् । अहीनाम् ॥ ३ ॥

### स्कन्दस्वामीयम् ।

'अत्र पितरो मादयध्वं यथाभागमावृषायध्वमि'त्यस्य 'यथाभागमश्री-

---

1 '॰द्राकार' क ख. पाठः. २. 'न' ग. पाठः.

वेत्येवैतदाह', तथा 'अमीमदन्त पितरो यथाभागमावृषायिषते'त्यस्य 'यथाभागमाशिषुरित्येवैतदाहे'ति शतपथब्राह्मणे विवरणाद् वृषायति(शरणा ? रशना)र्थे इति गम्यते । अश्नन् । अथवा वृषशब्दोऽत्र उपलक्षणद्वितीयान्तो व्यत्ययेन भावे द्रष्टव्यः, न कर्तरि । (यं ?) क्यङ् चेच्छायां नाचारे । इच्छाक्यच्येव याच्छान्दसत्वाद् दीर्घत्वम् आत्मनेपदत्वं (च) । वृषायमाणः । वर्षणमिच्छन्निति वर्षयितुमिच्छन्नित्यर्थः । (कं ? किं) कृतवान् । उच्यते । अवृणीत वृतवान् प्रार्थितवान् सोमम् । वृत्वा च त्रिकद्रुकेष्वपिबत् । अभिप्लवष्यहं पूर्वं त्रिकद्रुका इत्याचक्षते । पीतवान् । सुतस्य । द्वितीयार्थे षष्ठ्येषा । षष्ठ्याश्रुतेर्वैकदेशमिति शेषः । सुतं सोमं, सुतस्य वा सोमस्यैकदेशं स्वांशलक्षणम् । आसायकम् । आ इत्युपसर्गः अदत्त इत्याख्यातेन सम्बन्धयितव्यः । सायकशब्दोऽपि 'षोऽन्तकर्मणी'त्यस्य क्रियाशब्दो विशेषणं न वज्रनाम । वज्रशब्देनोपात्तत्वात् । सायकं शत्रूणामन्त(क)रम् । मघवा धनवानिन्द्रः आ अदत्त गृहीतवान् । वज्रं गृहीत्वा च अहन्नेनम् । एनमिति पूर्वस्यामृच्यादिष्टस्य मेघस्यान्वादेशः । (स ?) समनन्तरस्य वा । वज्रमिति तृतीयार्थे द्वितीया । हतवानेनं मेघमनेन वा वज्रेण । कीदृशम् । प्रथमजाम् अग्रे जातम् । अहीनाम् । निर्धारण एषा षष्ठी । मेघानां मध्ये ॥ ३ ॥

वेङ्कटमाधवीयम् ।

वृषायमाणः । वृषभ इवाचरन्नवृणीत सोममभिप्लवत्रिकद्रुक पूर्वं त्र्यहं त्रिकद्रुकं तस्मिन् सुतमपिबत् सोममादत्तान्तकरमायुधं मघवा तेनैनं मघवितरसमसुरं मेघानां मुख्यमहन् ॥ ३ ॥

यदिन्द्राहन्प्रथमजामहीनामान्मायिनाममिनाःप्रोतमायाः ।
आत्सूर्यंजनयन्द्यामुषासंतादीत्नाशत्रुंनकिलाविवित्से ॥ ४ ॥

यत् । इन्द्र । अहन् । प्रथमऽजाम् । अहीनाम् । आत् । मायिनाम् । अमिनाः । प्र । उत । मायाः । आत् । सूर्यम् । जनयन् । द्याम् । उषसम् । तादीत्ना । शत्रुम् । न । किल । विवित्से ॥ ४ ॥

१. 'आ' क. ख. पाठः. २. 'महिम्न' ख. पाठः.

स्कन्दस्वामीयम्।

यत् यदा हे इन्द्र! अहन् हतवानसि प्रथमजामहीनाम्। आत्। यदाशब्दश्रुतेरादिति निपातस्तदार्थे वर्तते। तदा। तत्सहायानां मायिनामति-सन्धानप्रमायिनाम् अमिनाः प्र। 'मीञ् हिंसायाम्'। प्रामिनाः प्रकर्षेण हिं-सितवानसि। उत मायाः। उतशब्दो मायाशब्दात् परो द्रष्टव्यः। माया अपि। न केवलमदोष्(रे!ठे)नैवाहिं हतवान् असि, किं तर्हि, तत्सहायानां मायावतीं प्रज्ञामतिसन्धायेत्यर्थः। तदैव वृष्टिमूलत्वात् सर्वजन्मनः, सूर्यं जनयन् द्यां च उषसं च। तादीत्नाशब्दस्ता(दृश)पर्यायः तावच्छब्दपर्यायो वा। तादृशं मायावत्सहायं तावन्तं वा महापरिमाणम्। अन्यं मेघं शत्रुं घातयितव्यं वैरिणं वा। न किलाविवित्से। विन्दतेरिदं रूपम्। न किलाविन्दः। नोलभथा इत्यर्थः। यादृगसौ मायावत्सहायो महापरिमाणो वा, तादृगन्यो नैवास्तीत्यर्थः। किलशब्द एव तदानींशब्दपर्यायस्तदेत्येतस्मिन्नर्थे वर्तते। सूर्यादीन् जनयंस्तदानीमिति। आच्छब्दस्तु पदपूरणः॥ ४॥

वेङ्कटमाधवीयम्।

यदिन्द्र। यदेन्द्र! हतवानसि। प्रथमं जातमहीनां यदाच तदनन्तरं तत्सहा-यानां मायावतां मायाः प्रकर्षेण हिंसितवानसि। तदनन्तरंमहिना तिरोभूतं सूर्यं मानुषसं च प्रादुर्भावयंस्त्वं तदानीं जगति न कञ्चन शत्रुं हतशिष्टमन्वविन्दः॥ ४॥

अहन्वृत्रं वृत्रतरं व्यंसमिन्द्रो वज्रेण महता वधेन।

स्कन्धांसीव कुलिशेना विवृक्णाहिः शयत उपपृक्पृथिव्याः॥ ५॥

अहन्। वृत्रम्। वृत्रऽतरम्। विऽअंसम्। इन्द्रः। वज्रेण। महता। वधेन। स्कन्धांसिऽइव। कुलिशेन। विऽवृक्णा। अहिः। शयते। उपऽपृक्। पृथिव्याः॥ ५॥

1. 'तत्र दैव' क. ख. पाठः. 2. 'द' ग. पाठः। 3. 'त्वे च वि' क. ख. पाठः. 4. 'वानसि' ख. पाठः. 5. 'नो त' ख ग. पाठः.

## स्कन्दस्वामीयम् ।

वृत्रं मेघं वृत्रनामानमसुरं वा । वृत्रतरम् । वर्ततेर्गत्यर्थस्येदं रूपम् । गन्तृतरम् । अतिशयेन गन्तारमित्यर्थः । व्यंसं विगतांसं विच्छिन्नांसम् । व्यंसनामानमपरमसुरं वा । कः । इन्द्रः । केन । वज्रेण । कीदृशेन । महता वधेन । नित्यं हन्त्रा । अथवा हन(न)नामैव वधः प्रहारः । वज्रं च तत्करणम् । वज्रेण महता प्रहारेण हतवान् । हतश्च सन् स्कन्धांसीव । वृक्षाणां स्थूला अधोभागाः स्कन्धांसि । तानि यथा कुलिशेन । वज्रनामैतत् । इह तु आयुधसामान्याद्वा कुठारे प्रयुक्तः । कुठारेण । विवृक्णा विविधं छिन्नानि शयीरन् तद्वत् । अहिर्मेघः । अंहतेर्वाहिर्गन्ता वृत्राख्यो व्यंसाख्यश्चासुरः । शयते । शेतिरिह स्थानार्थः । आमाशयो जलाशय इति यथाविमाता शयुरिति यथा । कथं तिष्ठति । उपपृक् पृथिव्याः । उपेत्येष समित्येतस्य स्थाने । संपर्चिता । पृथिव्यां भूमौ । प........वसत् मेघे उदकरूपेण भूमौ पतितं तिष्ठति शरीरेणैवासुरः ॥ ५ ॥

## वेङ्कटमाधवीयम् ।

अहन् वृत्रम् । हतवान् वृत्रमतिशयेन निवेष्टयितारम् । व्यंसं चापरमसुरमिन्द्रो महतायुधेन हन्त्रा यथा वृक्षस्य स्कन्धांसि कुठारेण विविधं छिन्नानि शेरत एवमहिः शेते छिन्नपादहस्तः पृथिव्या उपसर्चनः ॥ ५ ॥

इति प्रथमस्य द्वितीये षट्त्रिंशो वर्गः ॥

अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम् ।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः ॥ ६ ॥

अयोद्धाऽइव । दुःऽमदः । आ । हि । जुह्वे । महाऽवीरम् । तुविऽबाधम् । ऋजीषम् । न । अतारीत् । अस्य । समऽऋतिम् । वधानाम् । सम् । रुजानाः । पिपिषे । इन्द्रऽशत्रुः ॥ ६ ॥

---

१. 'रम् । सुप' क. ख. पाठः.

स्कन्दस्वामीयम् ।

अयोद्धा इति । योद्धुमसमर्थः अयोद्धा । यथा स दुर्मदः कुत्सितमदः सुरया मत्तः सन्नसमर्थोऽपि कश्चिद् युद्धायाह्वयेत, एवं वृत्र. आ हि जुह्वे । हिशब्दः पदपूरणः । युद्धायाहूतवानिन्द्रम् । कीदृशम् । महावीरं तुविबाधं महाविक्रान्तं बहूनां शत्रूणां बाधितारम् । ऋजीषम् आसन्दाना । अथवा यत् सोमस्य सूयमानस्यातिरिच्यते तदृजीषमुच्यते । सामर्थ्याच्चात्रान्तर्णीतमत्वर्थकः । ऋजीषिणमित्यर्थः । कः पुनरिन्द्रस्य ऋजीषेण सम्बन्धः । हारियोजनेऽस्य स भागो धानाश्चेति । आहूय च युद्धायेन्द्रं वृत्रः (नातारीत् ।) तरतिरत्र शक्नोत्यर्थे । (करो ? शक्तो)तेश्च नित्यं कर्मभूतधात्वन्तरसापेक्षत्वात् सोढुमिति वाक्यशेषः । नाशकत् । (अस्य) इन्द्रस्य (स्व)भूतानां समृतिं सङ्गतिं वधानां प्रहाराणां (ना)सहतेत्यर्थः । अथासहमानः किं कृतवान् । उच्यते । संरुजानाः पिपिषे । ग्रीवाः किल रुजाना उच्यन्ते । आत्मीया ग्रीवाः संपिष्टवान् चूर्णितवान् । प्रहारैर्वध्यमानश्चूर्णीकृत इत्यर्थः । अथवा रुजाना इति नदी(नां ? नाम), मेघश्च वृत्रः । नदीः सम्पिष्टवान् । बहुनोदकेन नदीनां कूलानि सम्पिष्य स्रोतांसि प्रवाहितवानित्यर्थः । सामर्थ्याद् वा गत्यर्थः सम्पिषिः । उदकरूपेण नदीः प्रति जगामेत्यर्थः । इन्द्रः शातयिता यस्य स इन्द्रशत्रुः ॥ ६ ॥

वेङ्कटमाधवीयम् ।

अयोद्धेव । युद्धासमर्थो मानी यथा समर्थमाह्वयत्येवमाहूतवानिन्द्रं महावीरं बहूनां बाधितारमृजीषिणं न चातारीदिन्द्रस्यायुधानां गतिम् । अथ पृथिव्यां निपातितोऽयवाः सन् नदीः सम्पिष्टवानिन्द्रो यस्य शातयितासीदिति ॥ ६ ॥

अपादहस्तोअपृतन्यदिन्द्रमास्यवज्रमधिसानौजघान ।
वृष्णोवध्रिःप्रतिमानंबुभूषन्पुरुत्रावृत्रोअशयद्व्यस्तः ॥ ७ ॥

अपात् । अहस्तः । अपृतन्यत् । इन्द्रम् । आ । अस्य । वज्रम् । अधि । सानौ । जघान । वृष्णः । वध्रिः । प्रतिऽमानम् । बुभूषन् । पुरुऽत्रा । वृत्रः । अशयत् । विऽअस्तः ॥ ७ ॥

१. 'दुर्मोदस्य' क. ख. पाठः.

## स्कन्दस्वामीयम् ।

अपादहस्त इति लुप्तोपमौ । अपाद इव अहस्त इव । यथा कश्चित् पादवर्जितः कश्चिदप्यचेष्टमानः किञ्चित् पृतन्यति, एवमपृतन्यत् असङ्ग्रामयत् योधितवानिन्द्रम् । योध्यमानश्चेन्द्रः अस्य वज्रमधि । आ इत्युपसर्गो जघानेत्याख्यातेन सम्बन्धयितव्यः । अस्य वृत्रस्याधि उपरि सानौ समुच्छ्रिते प्रदेशे आजघान आगमितवान् वज्रम् । वृष्णो वर्षितुरिन्द्रस्य वध्रिः वन्ध्योऽपि प्रति-(मानं प्रति)द्वन्द्वित्वमाप्तुमिच्छन् (पुरुत्रा) बहुत्राणकृद् (अ)शयत् अतिष्ठत् । व्यस्तः विखण्ड्य भूमौ क्षिप्त इत्यर्थः । अथवा वृत्रो मेघः । स बहुषु नदी-तडाकादिषु प्रदेशेषूदकरूपेणातिष्ठत् निक्षिप्त इति । केचित्तु वध्रिशब्दस्य रूढि-वशाद् वृषशब्दोऽत्र प्रजननसमर्थे बलवति वृषभे वर्तते । सामर्थ्याच्चात्रान्तर्णीत-(ण्यर्थः । वध्रिः) कृत्तवृषणे प्रजननासमर्थे दुर्बले बलीवर्दे वर्तत इति व्याचक्षते । यथा प्रजननसमर्थस्य बलवतो वृषभस्य दुर्बलः प्रजननासमर्थः प्रतिमानं बुभूषन् विक्षिप्तस्तिष्ठेद्, एवं वृत्र इन्द्रस्येति ॥ ७ ॥

## वेङ्कटमाधवीयम् ।

अपात् । हस्तपादवर्जितोऽपीन्द्रमपृतन्यत् । आजघान अस्योच्छ्रिते देशे वज्र-मिन्द्रः । वर्षितुर्वृषभस्य छिन्नवृषणः प्रतिद्वन्द्वी भवितुमिच्छन्नित्यौपमिकम् । अनेकेषु देशेषु वृत्रोऽशयच्छकलीकृतः ॥ ७ ॥

नदं॒ न भि॒न्नम॑मु॒या शया॑नं॒ मनो॒ रुहा॑णा॒ अति॑ य॒न्त्याप॑ः ।
याश्चि॑द्वृ॒त्रो म॑हि॒ना प॒र्यति॑ष्ठ॒त्तासा॒महि॑ः पत्सुत॒ःशीर्ब॑भूव ॥

न॒दम् । न । भि॒न्नम् । अ॒मु॒या । शया॑नम् । मनः॑ । रुहा॑णाः । अति॑ । य॒न्ति॒ । आपः॑ । याः । चि॒त् । वृ॒त्रः । म॒हि॒ना । प॒रि॒ऽअति॑ष्ठत् । तासा॑म् । अहि॑ः । प॒त्सु॒तःऽशीः॑ । ब॒भू॒व ॥ ८ ॥

## स्कन्दस्वामीयम् ।

यथा महान्तं नदं भिन्नं भग्नकूलमापोऽतीत्य गच्छेयुः तद्वत् । अमुया इत्थंभूतलक्षणया....यं सामर्थ्यात् प्रतिनिर्देशः । अनया महत्या वृद्ध्या सम्बद्धं

१ 'अधीत्यु', २ 'आ......शयत्' ख. पाठः.

शयानं तिष्ठन्तम्। मनो रुहाणाः आरोहन्त्यः। मनुष्याणां चित्तं ह्लादयन्त्य इत्यर्थः। अतियन्ति अतीत्यान्यतो गच्छन्ति। आपः इन्द्रेण भिन्नात्मेघादितस्त्यान्यतो गच्छन्तीत्यर्थः। चिच्छब्दः पदपूरणः। एवार्थो वा। या एव वृत्रो (महिना) महता सेनालक्षणेन स्वशरीरेण वा पर्यतिष्ठत् परिवृत्यातिष्ठत्, तासामेवेन्द्रेण हते वृत्रे। 'अहिर्मेघः पत्सुतःशीर्बभूव। पादशब्दात् तृतीयार्थे सप्तमी। 'पादः पत्' (६-४-१३०) इति पद्भावः। पत्सु। तृतीयार्थवृत्तित्वात् सप्तम्याः, सप्तम्यन्तादप्यस्मात् 'तेनैकदिक्', 'तसिश्च' (४-३-११२, ११३) इति (तस्। सप्तमीविभ)क्तेरलुक्। पत्सुतः शेते तिष्ठतीति पत्सुतःशीः। यतः पादौ ततः स्थाता बभूव अधोवृत्तिर्बभूवेत्यर्थः। हताद्धि मेघादूर्ध्वं निश्चरन्तीनामपां पादतः स्थायी भवति मेघः। अत एवमुच्यते — तासामेवाहिः पत्सुतःशीर्बभूवेति ॥ ८ ॥

वेङ्कटमाधवीयम्।

नदं न। यथा भिन्नं सेतुमापोऽतियन्त्येवमनया पृथिव्या सह शयानं मनुष्याणां मन आरोहन्त्यो ह्लादयन्त्योऽतीत्य गच्छन्ति। याश्चिद्वृत्रो पृत्रः शरीरमहत्त्वमा परिवृत्यातिष्ठत् तासामहिरसुरः पत्तनशायी बभूव ॥ ८ ॥

नीचावया अभवद्वृत्रपुत्रेन्द्रो अस्या अव वधर्जभार।
उत्तरा सूरधरः पुत्र आसीद्दानुः शये सहवत्सा न धेनुः ॥ ९ ॥

नीचाऽवयाः। अभवत्। वृत्रऽपुत्रा। इन्द्रः। अस्याः। अव। वधः। जभार। उत्ऽतरा। सूः। अधरः। पुत्रः। आसीत्। दानुः। शये। सहऽवत्सा। न। धेनुः ॥ ९ ॥

स्कन्दस्वामीयम्।

(वयः) शाखा अन्यत्र। इह तु शाखास्थानीये भुजे वयश्शब्दो वर्तते। नी(चा ! चौ) य(या ! यसौ) यस्याः सा नीचावयाः प्रलम्बबाहुः 'अभवत्। का। वृत्रपुत्रा। वृत्रः पुत्रो यस्याः सा, वृत्रपुत्रा वृत्रस्य माता। वृत्रे हन्यमाने तन्माता तद्वधपरिरक्षया तस्योपरि प्रसार्य बाहू अतिष्ठदित्यर्थः। तथा व्यवस्थिताया अपि इन्द्रः अस्या अव वधः जभार। वधः वज्रनामैतत्। वज्रं जभार प्रापितवान्। तयावष्टब्धोऽपि वृत्रस्यैव शरीरे वज्रं क्षिप्तवानित्यर्थः।

केन पुनः प्रकारेण नीचावया अभवत् । उत्तरा उपरिवर्तिनी वृत्रस्योपरि नि-कुटितो प्रलम्बितबाहुः । सूः । सूत इति सूर्माता । अधरः अधोवर्ती बाहु-जङ्घान्तरस्थायी पुत्र आसीत् । दानुर्वृत्रस्य माता शये स्थितवती । सहवत्सा न धेनुः वत्ससहितेव धेनुः ॥ ९ ॥

वेङ्कटमाधवीयम् ।

नीचावयाः । नीचीनबाहुशाखा अभवद्, वृत्रो यस्याः पुत्रः । वृत्रे हन्यमाने तन्माता तद्वधपरिरिरक्षयिषया तस्योपरि बाहू प्रसारितवती । अथेन्द्रोऽस्या अधस्तात् वृत्रशरीर एव वज्रं प्रहृतवान् । तदानीं वृत्रशरीरयोर्मातृ तन्माता वृत्रबाधा । तदानीं दानुर्वृत्रमाता वत्ससहिता धेनुरिव शये ॥ ९ ॥

अतिष्ठन्तीनामनिवेशनानांकाष्ठानांमध्येनिहितंशरीरम् ।
वृत्रस्यनिण्यंविचरन्त्यापोदीर्घंतमआशयदिन्द्रशत्रुः ॥ १० ॥

अतिष्ठन्तीनाम् । अनिऽवेशनानाम् । काष्ठानाम् । मध्ये । निऽहितम् । शरीरम् । वृत्रस्य । निण्यम् । वि । चरन्ति । आपः । दीर्घम् । तमः । आ । अशयत् । इन्द्रऽशत्रुः ॥ १० ॥

स्कन्दस्वामीयम् ।

अतिष्ठन्तीनामनवस्थायिनीनां चलानाम्[1] । अनिवेशनानाम् । निविश्यते क्षीयते यस्मिन् नदीनद्यादौ स्थाने तन्निवेशनम् । तद् यासां नास्ति भूयस्त्वात् तासामनिवेशनानाम् । भूयस्त्वादसम्भविव्यवस्थानां चलानां बह्वीनां चेत्यर्थः । काष्ठानां मध्ये । आपः काष्ठा उच्यन्ते । अपां मध्ये निहितं स्थापितं शरीरम् । कस्य । वृत्रस्य । वृत्रनाम्नोऽसुरस्य । कथं च पुनर्निहितम् । निण्यम् । अन्तर्हितनामैतत् । अन्तर्हितं मरणभयात् गुप्तं निहितमित्यर्थः । एवम्भूतमपि विचरन्त्यापः । चरतिर्गत्यर्थः । सर्वे च गत्यर्था ज्ञानार्थाः । सामर्थ्याच्चात्रान्तर्णीतण्यर्थतो । विज्ञापयन्ति आप आत्मनो मध्ये । ता इन्द्राय प्रकाशयन्त्याप इत्यर्थः । प्रकाशितेऽस्मिन्निन्द्रेण हते दीर्घं मरणलक्षणं तमः आशयत् आस्थितवान् इन्द्रशत्रुः वृत्रः । अथवा वृत्रो मेघः तस्य शरीरमध्ये आपो निधीयन्ते । तच्छरीरमपां मध्ये इत्येतस्याः सप्तम्या निराकाङ्क्षीकरणार्थमवस्थिता

१. 'ता न प्र', २. 'पन्थानां', ३. 'न्यं' क. ख. पाठः, ४. 'तापि' ग. घ. पाठः.

इति वाक्यशेषः । अपां मध्येऽवस्थितानां निहितं निहितं शरीरं मेघस्य । तथापि तु व्यवस्थितस्य वृत्रस्य निण्यं विचरन्त्यापः । निण्यमिति नान्तर्हितनाम, किं तर्हि, येन प्रदेशेन मेघो नीचैर्नमति छिद्रीभवति, तदपां निर्गमनबिलं निण्यम् । विचरन्तीत्यपि शुद्धज्ञानार्थ एव, नान्तर्णीतण्यर्थः । [1]मेघनिर्गमनबिलं विजानन्त्याप इत्यर्थः । अप्सु च निर्जिगमिषन्तीषु तदवरुरुत्सया दीर्घं समस्तनमोमण्डलव्यापि तम आतयत् आस्थितवानिन्द्रशत्रुर्मेघः । तमोरूपेण स्वरूपेण मेघः समस्तं नभो व्याप्यातिष्ठदित्यर्थः ॥ १० ॥

वेङ्कटमाधवीयम् ।

अतिष्ठन्तीनाम् । अतिष्ठन्तीनामस्थावरानामपां मध्ये वृत्रस्य शरीरमन्तर्हितं प्रविशत्यन्त्याप इन्द्रस्य वृत्रं निकीर्णं दर्शयितुम् । तत इन्द्रेण हतो वृत्रो दीर्घं तम आशयत् ममारेति ॥ १० ॥

इति प्रथमस्य द्वितीये सप्तत्रिंशो वर्गः ॥

---

दासपत्नीरहिगोपा अतिष्ठन्निरुद्धा आपः पणिनेव गावः ।
अपां बिलमपिहितं यदासीद्वृत्रं जघन्वाँ अप तद्ववार ॥ ११ ॥

दासऽपत्नीः । अहिऽगोपाः । अतिष्ठन् । निऽरुद्धाः । आपः । पणिनाऽइव । गावः । अपाम् । बिलम् । अपिऽहितम् । यत् । आसीत् । वृत्रम् । जघन्वान् । अप । तत् । ववार ॥ ११ ॥

स्कन्दस्वामीयम् ।

[2]दस्यतेरुपक्षयार्थस्य दासः । श्रमादिना उपक्षीणशक्तिः कर्मकरादिः । तस्य पारयित्र्यो दासपत्न्यः । उपक्षीणशक्तिं हि श्रान्तं कर्मकरादिं पीतमात्रा एवापः आप्यायनेन पालयन्ति । अहिगोपाः अहिना गुप्ताः मेघोदरान्तर्गताः अतिष्ठन् निरुद्धाः । येन निरुद्धाः । अहिगोपा इति वचनादहिना । 'वृत्रं जघन्वान्' इति वा वचनात् परस्ताद् वृत्रेण ता निरुद्धा अतिष्ठन् आपः । पणिनेव गावः । पणिर्वणिग् भवति । यथा विक्रयार्थं वणिजा गावो निरुद्धास्तिष्ठेयुः, तद्वत् । एवं निरुद्धानामपां निर्गमनबिलम् अपिहितं छादितं यदासीत् वृत्र

1 '१.१६'५ पाठ  2 'दा'क ख. पाठ

मेघं तद्रक्षितारमसुरं वा। जघन्वान्। हतवानसि। अर्थः। वृत्रः। अप तद् ववार। तद् बिलमपावृतवान् उद्घाटितवान्॥ ११॥

वेङ्कटमाधवीयम्।

दासपत्नीः। दासाधिपत्न्योऽहिना गुप्ता अतिष्ठन् निरुद्धा आपोऽसुरैरिव गावः। तासामपां बिलमपिहितं यदासीद् वृत्रं जघ्निवान् अपववार तदिति॥ ११॥

अश्व्यो वारो अभवस्तदिन्द्र सृके यत्त्वा प्रत्यहन्देव एकः।
अजयो गा अजयः शूर सोममवासृजः सर्तवे सप्त सिन्धून्॥ १२॥

अश्व्यः। वारः। अभवः। तत्। इन्द्र। सृके। यत्। त्वा। प्रतिऽअहन्। देवः। एकः। अजयः। गाः। अजयः। शूर। सोमम्। अव। असृजः। सर्तवे। सप्त। सिन्धून्॥ १२॥

स्कन्दस्वामीयम्।

अश्वशब्दोऽत्र "अथापि तद्धितेन कृत्स्नवन्निगमा भवन्ति" इत्येवमश्वावयवे पृष्ठे वर्तते। अश्वपृष्ठे साधुः स्थिरयानः अश्व्यः। वारः वाहयिता। अपोहयितरि वारशब्दः प्रसिद्धः अश्ववार इति। अश्वस्य वा वाहयिताश्ववार उच्यते। अथवा शत्रूणां वारः अभवः। तत् तदा हे इन्द्र!। कदा। उच्यते। सृके। सृक इति वज्रनाम। 'यस्य च भावेन—' (२–३–३७) इत्येवं चैषा सप्तमी। तच्छ्रुतेश्च लक्षणभूतयोग्यक्रियाध्याहारः। सङ्ग्रामनाम वा। अपठितोऽपि सामर्थ्यात् सृकशब्दः पक्षेगृहीते सङ्ग्रामे वा। यत् यदा त्वां प्रत्यहन्। हन्तिरत्र गत्यर्थः। त्वां प्रति गतवान्। देव एकः। कतमः। मरुद्गणः। एवं ह्यैतरेयिण इतिहासमधीयते—"इन्द्रो वै वृत्रं हनिष्यन् सर्वा देवता अब्रवीदनु मोपतिष्ठध्वमुप मां ह्वयध्वमिति। तथेति तं हनिष्यन्त आद्रवन्। सोऽवेन्मां वै हनिष्यन्त आद्रवन्ति। हन्तेमान् भीषया इति तानभि प्राश्वसीत्। तस्य श्वसथादीषमाणा विश्वेदेवा अद्रवन्। मरुतो हैनं नाजहुः। प्रहर भगवो जहि वीरयस्वेत्येवैनमेतां वाचं वदन्त उपातिष्ठन्त" इति।

१. 'षे' क. ख. पाठः.

तदेतदिहोच्यते — सृके यत् त्वा प्रत्यहन् देव एक इति। अथवा सृक इति तृतीयार्थे सप्तमी। आयुधसामान्याच्च वृत्रायुधे सृकशब्दो वर्तते। हन्तिश्च वधार्थ एव। सृकेण हेननायुधेन यदा त्वां प्रति हतवान् वृत्र इत्यर्थः। किञ्च, तदैव त्वं देवः दानादिगुणयुक्त[1] एक एव तम् अजयो गाः तदैवाजयः। हे शूर! सोमं तदैवावासृजः। अवसर्गोऽनुज्ञा। अनुज्ञातवान्। सर्तवे गमनाय सप्त सिन्धून् सप्तसङ्ख्याका गङ्गाद्याः प्रधानभूता नदीः॥ १२॥

### वेङ्कटमाधवीयम्।

अश्व्यो वारः। यदा भवत्प्रतिबोधनार्थमसुरैः पीड्यमानः कश्चिद् देवस्त्वां त्वदीये वज्रे निहन्ति। तदा त्वमश्वपृष्ठस्थो दंशानां वारको वाल इव भवसि। शत्रुनुभयतो हंसि। स त्वमसुरेभ्योऽजयो गाः। अजयश्च सोमम्। अवासृजः सरणाय सप्तसिन्धून् गङ्गाद्याः सप्त देवनदीः॥ १२॥

**नास्मैविद्युन्नतन्यतुःसिषेधनयांमिहमकिरद्ध्रादुनिंच।**
**इन्द्रश्चयद्युयुधातेअहिश्चोतापरीभ्योमघवाविजिग्ये॥ १३॥**

न। अस्मै। विऽद्युत्। न। तन्यतुः। सिसेध। न। याम्। मिहम्। अकिरत्। ह्रादुनिम्। च। इन्द्रः। च। यत्। युयुधाते इति। अहिः। च। उत। अपरीभ्यः। मघऽवा। वि। जिग्ये॥ १३॥

### स्कन्दस्वामीयम्।

नास्मै। षष्ठ्यर्थे चतुर्थी, तादर्थ्ये वा। अस्येन्द्रस्य स्वभूता। अस्य चेन्द्रस्यार्थाय। न विद्युत् नापि तन्यतुः स्तनयित्नुशब्दः। सिषेध। अन्तर्णीतण्यर्थोऽत्र सिधिः। अहिं स साधितवान् वशीकृतवानित्यर्थः। अथवा सिधिरत्रापनयनार्थः। 'ते सेधन्ति पथो वृकमि'ति यथा। अहिमपनीतवानित्यर्थः। नापि यां मिहम्। 'मिह सेचने'। वृष्टिरत्र मिह उच्यते। अकिरत् विकीर्णवान्। ह्रादुनिं च। ह्रादुनिः ह्रात्कारः हनहनेशब्दः ................ सिषिधतुः। न कश्चिदप्यन्यः सिषेधेत्यर्थः। इन्द्रश्च यद् यदा युयुधाते अहिश्च।

---

१. 'दण्यादृत्वेना', २. 'द्धिः', ३. 'नादिश' क. ख. पाठः.

यदेति वचनादुतशब्दोऽपि तदार्थे । अपरीभ्यः । अपरीशब्दोऽन्यवचनः । तादर्थ्ये चात्र चतुर्थी । अन्यासां प्रजानामर्थाय । मघवा विजिग्ये, विजितवान् अहिम् ॥ १३ ॥

वेङ्कटमाधवीयम् ।

नास्मै विद्युत् । अहिर्मेघरूपं धारयन्निन्द्रस्य वधार्थं विद्युदादीनकरोत् । सर्वा नैव ताभिरिन्द्रो जिगाय । नास्मा इन्द्राय वारणार्थमभवद् विद्युद्, न च गर्जितशब्दः, न च यां मिहमकरोद्ध्रादुनिं च । यदेन्द्रश्चाहिश्च युयुधाते तदानीं विद्युदादिभ्योऽतिरिक्ताभ्योऽपि मायाभ्यो विजिग्येऽहिमिन्द्रः ॥ १३ ॥

अहेर्यातारंकमपश्यइन्द्रहृदियत्तेजघ्नुषोभीरगच्छत् ।
नवचयन्नवतिंचस्रवन्तीःश्येनोनभीतोअतरोरजांसि ॥ १४ ॥

अहेः । यातारम् । कम् । अपश्यः । इन्द्र । हृदि । यत् । ते । जघ्नुषः । भीः । अगच्छत् । नव । च । यत् । नवतिम् । च । स्रवन्तीः । श्येनः । न । भीतः । अतरः । रजांसि ॥ १४ ॥

स्कन्दस्वामीयम् ।

अहेर्यातारम् । 'यथावजीवो यातेव भीम' इति प्रयोगदर्शनाद् वियात[1] इति च वधकर्मसु पाठाद् यातिर्वधार्थोऽपि, न प्रापणार्थ एवेति गम्यते । वधकर्मसु हि वियात इत्येतद् याते रूपमभिप्रेतं न यात(य)तेः, भेदेन पठितत्वात् । अहेर्यातारं हन्तारं त्वत्तोऽन्यं कमपश्यः । हे इन्द्र! हृदि हृदये यत् ते जघ्नुषः । अन्तर्णीतसनर्थोऽत्र हन्तिः । जिघांसोः । भीरगच्छद् भयं गतम् । उत्पत्तिरत्र गमनमभिप्रेतम् । अन्यो हनिष्यतीति हृदये भयमुत्पन्नमित्यर्थः । यद् भीतः किं कृतवान् । उच्यते । नव च यत्[3] (नवतिं स्रवन्तीः नदीश्च श्येनो न श्येन इव) अहिं हन्तुं शीघ्रतरः तीर्णवान् रजांसि लोकांश्च त्रीनपि । एवदुक्तं भवति — कोऽन्यस्त्वत्तोऽहेर्हन्ता, येन तस्य वधशङ्काशोभितहृदयो नवनवतीर्नदीर्लोकत्रयं च तीर्त्वाहिं हन्तुं त्वरितोऽगम इति ॥ १४ ॥

---

१. 'त्रि' म., 'त्री' ष. पाठः. २. 'विनयातीति', ३. 'व......स' क. रा. पाठः.

## वेङ्कटमाधवीयम् ।

अहेर्यातारम् । "इन्द्रो वै वृत्रं हत्वा ना(स्तृषो)ति मन्यमानः परां परावतं जगाम" । तदाह — अहेरसुरस्य हन्तारं कमपश्यः इन्द्र । यातिर्वधकर्मा । हृदये यत्तव भयमागतं वृत्रं जघ्नुषः यदा त्वं नव च नवतीश्च नदीरत्यतरः श्येन इव शीघ्रं भीतस्त्वमिति ॥ १४ ॥

इन्द्रो॑ या॒तोऽव॑सितस्य॒ राजा॒ शम॑स्य च शृ॒ङ्गिणो॒ वज्र॑बाहुः ।
सेदु॒ राजा॑ क्षयति चर्षणी॒नाम॒रान्न ने॒मिः परि॒ ता ब॑भूव ॥ १५ ॥

इन्द्रः॑ । या॒तः । अव॑ऽसितस्य । राजा॑ । शम॑स्य । च॒ । शृ॒ङ्गिणः॑ । वज्र॑ऽबाहुः । सः । इत् । ऊँ॒ इति॑ । राजा॑ । क्ष॒य॒ति॒ । च॒र्ष॒णी॒नाम् । अ॒रान् । न । ने॒मिः । परि॑ । ता । ब॒भू॒व ॥ १५ ॥

## स्कन्दस्वामीयम् ।

इन्द्र यातः गच्छतः जङ्गमस्याश्वादेः । अवसितस्य । 'षिञ् बन्धने' । अवबद्धस्य । स्थावरस्य जङ्गमस्येत्यर्थः । किम् । राजा । ईश्वरः । शमस्य शान्तस्य चर्व्यादेः । शृङ्गिणः गवादेः । अथवा जङ्गमग्रहणेनैव गवादेः शृङ्गवतो गृहीतत्वाच्छृङ्गशब्दोऽत्र दीप्तिवचनः । दीप्तिमतो नक्षत्रादेः । कीदृशः । वज्रबाहुः । बाहुशब्देनात्र हस्तो लक्ष्यते । वज्रहस्तः । सेदु स एव राजा । 'राजृ दीप्तौ' । दीप्तः । क्षयति । क्षयतेरैश्वर्यकर्मण एतद्रूपम् । ईष्टे । चर्षणीनां मनुष्याणामपि । न केवलमीष्ट एव, किं तर्हि, अरान् न नेमिः । रथचक्रपृष्ठं हि नेमिरुच्यते । स यथा अरान् परिगृह्णाति तद्वत् परि ता बभूव । परिपूर्वो भवतिः परिग्रहे । ता इति सर्वेषां मनुष्याणां वा जङ्गमादीनां वा प्रतिनिर्देशः । तान् मनुष्यान् तानि वा जङ्गमादीनि परिगृह्णाति वशीकरोतीत्यर्थः ॥ १५ ॥

वेङ्कटमाधवीयम् ।

इन्द्रो यातः । इन्द्रो जङ्गमस्य स्थावरस्य च राजा शान्तस्य हरिणादेः शृङ्गिणो महिषादेश्च वज्रबाहुः । स देवमनुष्याणां राजा भूत्वा निवसति । परिभवति च सर्वाण्यानि भूतान्यराानिव नेमिः ॥ १५ ॥

इति प्रथमस्य द्वितीये अष्टत्रिंशो वर्गः ॥

इत्थं द्वितीयमध्यायं व्याकरोत् प्रथमेऽष्टके ।
गाधिनिर्माधवो नाम सङ्ग्रहार्थं प्रदर्शयन् ॥
इति श्रीवेङ्कटमाधवार्यविरचिते ऋक्संहिताव्याख्याने
प्रथमे द्वितीयोऽध्यायः ॥

---

# स्मृतवाक्याद्यनुक्रमणी ।

| पृष्ठम् | ऋक् | वाक्यानि | ग्रन्थनाम | ग्रन्थकर्तृनाम |
|---|---|---|---|---|
| २ | १ | 'ऋतेन मित्रावरुणा' | ... | ... |
| ,, | ,, | 'कवी नो मित्रावरुणा' | ... | ... |
| ,, | ,, | 'अह्वयच्छुनमन्धाय—' | ... | ... |
| ,, | ,, | 'इन्द्राग्नी द्यावापृथिवी' | ... | ... |
| ,, | ,, | 'अग्ने पावकरोचिषा' | ... | ... |
| ,, | ,, | 'घृताहवन दीदिवः' | ... | ... |
| ,, | ,, | 'ग्रावो नेष्टः पिब—' | ... | ... |
| ,, | ,, | 'विश्वेदेवासो मरुतो' | ... | ... |
| ,, | ,, | 'विश्वे यजत्रास्त आदित्याः' | ... | ... |
| ,, | ,, | 'युवं वरो सुषाम्णे—' | ... | ... |
| ,, | ,, | 'पेशो मयो भवेतासे' | ... | ... |
| ,, | ,, | ... | ... | मेधातिथिः |
| ३<br>५ | २<br>६ | 'एकं चमसं चतुरः—' | ... | ... |
| ३ | ३ | 'बृहस्पतिर्विश्वरूपां—' | ... | ... |
| ,, | ,, | 'रथं ये चक्रुः—' | ... | ... |
| ५ | ७ | 'इमं रथो मणिमांसो—' | पुराणम् | ... |
| ७ | १ | 'ततोऽनन्तरमैन्द्राग्नम्' | ... | ... |
| ,, | २ | 'शाखा शाखासि शुम्भति' | ... | ... |
| ९ | ४ | 'सोमं नः स्तोममागहि' | | ... |
| ११ | १ | 'तृतीयस्यादित्राश्विनः' | ... | ... |
| १३ | ५ | 'हिरण्यपाणि सावित्री—' | | ... |
| ,, | ,, | 'अथ यत्र ह तद् देवेभ्यः—' | शाट्यायनब्राह्म- | ... |
| ,, | ,, | 'प्राशित्रं सवितुः पाणी—' | ,, [णम् | ... |
| ,, | ६ | 'अद्भ्यो वा एष प्रातरुदेत्यपः—' | श्रुतिः | ... |
| ,, | ,, | 'अग्नेर्वा आदित्यो जायते' | ,, | ... |
| ,, | ,, | 'आपो वा इदमग्र आसन्' | ,, | ... |
| १५ | ९ | 'एकाग्नेः' | ... | ... |
| ,, | १० | 'द्वे तु देवानाम्' | ... | ... |

| पृष्ठम् | ऋक् | वाक्यानि | अन्यनाम | अन्यकर्तृनाम |
|---|---|---|---|---|
| ३० | १ | 'कस्य नूनं शुनःशेप आजीगर्तिः' | … | … |
| ,, | ,, | 'कस्य नूनं शु काव्याया' | … | … |
| ,, | ,, | 'हरिश्चन्द्रो नाम राजा —' | ब्राह्मणम् | … |
| ,, | ,, | 'परितोषाद् भयाल्लोकात् —' | … | पौराणिकाः |
| ३८ | २ | 'प्रजापतिरुवाच अग्निर्वै —' | … | … |
| ३९ | ,, | 'अग्नेर्वैक्' | … | … |
| ,, | ३ | 'तमग्निरुवाच सविता वै —' | … | … |
| ,, | ,, | 'सवितुरतृचः' | … | … |
| ४१ | ५ | 'भगभक्तस्य भागी वा' | … | शौनकः |
| ,, | ,, | 'स सवितारमुपससार —' | ब्राह्मणम् | … |
| ,, | ६ | 'तं सवितोवाच वरुणाय —' | … | … |
| ,, | ,, | 'परं शेपश्च वारुणः' | … | … |
| ४२ | ७ | 'विश्वेदेवाः पुष्करे त्वाहवन्त' | … | … |
| ४७ | १ | 'शुनश्शेपेण निहितम्' | … | … |
| ,, | ४ | 'सनयच्छन्दसत्' | … | … |
| ५८ | ११ | 'आदित्यचन्द्रावनलानिलौ —' | पुराणम् | … |
| ,, | १४ | 'ते हिम्मावनुषो नरोऽभिमाति —' | … | … |
| ५९ | १५ | 'देवेभ्यश्च पितृभ्य वा' | … | … |
| ६१ | १ | 'तं वरुण उवाचाग्निर्वै —' | … | … |
| ,, | ,, | 'वसिष्ठाहि मियेध्येत्यामे' | … | … |
| ६५ | ५ | 'देवैः सह मनुष्याणां —' | … | … |
| ७४ | १० | 'अग्निः स्तूयमानः शुनश्शेपं —' | … | … |
| ७६ | ,, | 'अग्निरपि रुद्र उच्यते' | … | यास्कः |
| ७७ | १३ | 'इति प्रार्थितोऽग्निस्तमुवाच —' | … | … |
| ७८ | १ | 'ऐन्द्रश्चतुर्ऋचः परः' | … | … |
| ,, | ,, | 'तमृत्विज ऊचु —' | … | … |
| ,, | ,, | 'अथैनं द्रोणकलशमभ्यवनिना- [य —' | ब्राह्मणम् | … |
| ८१ | ९ | | | |
| ८० | ५ | 'उलूखलस्य द्वे इमे' | … | … |
| ८२ | ७ | 'द्वे परे मुसलस्य चोलूखलस्य च' | … | … |
| ८३ | ९ | 'प्रजापतिं हरिश्चन्द्रं चर्म —' | … | … |
| ,, | ,, | 'चर्माधिषवणीयं वा सोमं —' | … | बृहद्देवताकारः |

| पृष्ठम् | क्रम | वाक्यानि | ग्रन्थनाम | ग्रन्थकर्तृनाम |
|---|---|---|---|---|
| ८४ | ९ | 'चर्माधिपवर्णीय वा सोमं —' | | |
| ,, | ,, | 'प्रजापतेर्हरिश्चन्द्रस्यान्त्या —' | | कात्यायन |
| ,, | ९ | 'त विश्वेदेवा ऊचु —' | | |
| ,, | ,, | 'एन्द्र परिषद्धि सत्येस्युत्तर —' | | |
| ८५ | २ | 'शिप्र शीर्षसु वितता हिरण्यै —' | | |
| ८८ | ६ | 'कुण्डृणाची गोगलतिका —' | | |
| ,, | ,, | 'आह्लु याडुरेल भवहति' | श्रुति | |
| ९० | २ | 'रीयते मैनति' | | |
| ९१ | ७ | 'अपूर्वस्यागमो योग, | | |
| ९५ | १० | 'यतो नु श्रेष्ठस्तेन वसिष्ठ | शतपथ | |
| ९८ | १६ | 'तस्मा इन्द्र स्तूयमान —' | | |
| ९९ | १७ | 'तमिन्द्र उवाचाश्विनौ नु—' | | |
| १०१ | १९ | तमश्विनावूचतु उषस— | | |
| ,, | २० | 'उपस्यस्तृच उत्तर | | |
| १०२ | २१ | ईमहे यामि मन्महे | | |
| १०४ | १ | हिरण्यस्तूप आङ्गिरसस्त्वं | | |
| ,, | ,, | आग्नेय प्रथम सूक्तम् | | |
| ,, | , | तासाचिपि भृगुर्जज्ञे—' | | ऐतिहासिका |
| , | ,, | त्रिसदस्युं मैक्ष्वाका— | | |
| १०७ | ३ | सर्वमिदमन्ध तम आसीत् — | | |
| , | | 'मथीयदीं विभे मातरिश्वा | | |
| , | ,, | 'त्वामग्ने पुष्करादधि | | |
| , | | देवा किल स्वयमेव— | | |
| १०८ | ४ | स्वर्गकामो असुरान्म्— ' | | |
| ,, | ,, | तयोर्ज्योत्स्नामाकिनामाणि — | | |
| ,, | ,, | 'आहुतो अग्निम् | | |
| १०९ | ,, | अथ ते योनिर्ऋत्विय ' | | |
| ,, | ५ | और्वशय आयुर्गन्धर्वे—' | | |
| ११० | ६ | तदश्नीयन्ति | | |
| ,, | ,, | 'वर्मणि द्वीपिन इति | | |
| १११ | ८१ | उर्वश्यामुत्पन्न पुरूरवस —' | | |
| , | , | 'मनु प्रजाकामा नाथाहुति—' | | |

| पृष्ठ | अङ्क | वाक्यानि | ग्रन्थनाम | ग्रन्थकर्तृनाम |
|---|---|---|---|---|
| ११८ | १४ | 'वैश्वानो याथं पुह' | ... | ... |
| १२० | १६ | 'हिरण्यस्तूपो यागायाग्नि—' | ... | ... |
| १२१ | १ | 'द्वे ऐन्द्रे' | ... | .. |
| " | " | 'प्रजापतेर्वा एत—वेद्—' | सरकाण्वसु-ब्राह्मणम् | ... |
| १२४ | २ | 'अत्र पितरो मादयध्व—' | ... | ... |
| " | " | 'यथाभागमभीसत्येवैतदाह' | शतपथब्राह्मणम् | ... |
| १२५ | " | 'अमीमदन्त पितरो यथाभागं—' | ... | ... |
| " | " | 'यथाभागमाशिषुरित्येवैतदाह' | शतपथब्राह्मणम् | ... |
| " | " | 'अभिप्लव स्याहं पूर्वं त्रिकद्रुकः' | ... | ... |
| १३३ | १२ | 'अधाधि तद्विलेन कुरुतय —' | ... | ... |
| " | " | 'इन्द्रो वै वृत्रं हनिष्यन् —' | ... | ऐतरेयिणः |
| १३४ | १३ | 'ते सेधन्ति पथो वृकम्' | ... | ... |
| १३५ | १४ | 'यथा पतीयो यात्येव भीमः' | ... | ... |
| १३६ | " | 'इन्द्रो वै वृत्रं हत्वा—' | ... | ... |

# LIST OF SANSKRIT PUBLICATIONS FOR SALE.

| | Rs. | As. | P. |
|---|---|---|---|
| भक्तिमञ्जरी Bhaktimanjari (Stuti) by H. H. Svati Srī Rāma Varma Mahārāja. | 1 | 0 | 0 |
| स्यानन्दूरपुरवर्णनप्रबन्धः Syanandurapuravarnana-prabandha (Kavya) by H. H. Svati Srī Rāma Varma Mahārāja, with the commentary Sundarī of Rajaraja Varma Koil Tampuran. | 2 | 0 | 0 |

---

## Trivandrum Sanskrit Series.

| | Rs. | As. | P. |
|---|---|---|---|
| No. 1—दैवम् Daiva (Vyakaraṇa) by Deva with Puruṣakāra of Kṛṣṇalīlāśukamuni (*out of stock*). | 1 | 0 | 0 |
| No. 2—अभिनवकौस्तुभमाला-दक्षिणामूर्त्तिस्तवौ Abhinavakaustubhamala and Daksinamurtistava by Kṛṣṇalīlāśukamuni (*out of stock*). | 0 | 2 | 0 |
| No. 3—नलाभ्युदयः Nalabhyudaya (Kavya) by Vāmana Bhaṭṭa Bāṇa (*second edition*). | 0 | 4 | 0 |
| No. 4—शिवलीलार्णवः Sivalilarnava (Kavya) by Nīlakaṇṭha Dīkṣita (*out of stock*). | 2 | 0 | 0 |
| No. 5—व्यक्तिविवेकः Vyaktiviveka (Alaṅkāra) by Mahima-Bhaṭṭa with commentary (*out of stock*). | 2 | 12 | 0 |
| No. 6—दुर्घटवृत्तिः Durghatavrtti (Vyakaraṇa) by Saraṇadeva (*out of stock*). | 2 | 0 | 0 |
| No. 7—ब्रह्मतत्त्वप्रकाशिका Brahmatattvaprakasika (Vedanta) by Sadāśivendrasarasvatī (*out of stock*). | 3 | 4 | 0 |
| No. 8—प्रद्युम्नाभ्युदयम् Pradyumnabhyudaya (Nāṭaka) by Ravi Varma Bhopa (*out of stock*). | 1 | 0 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No 9—विरूपाक्षपञ्चाशिका **Virupaksapancasika** (Vedanta) by Virupaksanatha with the commentary of Vidyacakravartin (*out of stock*). | 0 | 8 | 0 |
| No. 10—मातङ्गलीला **Matangalila** (Gajalaksana) by Nilakantha (*out of stock*) | 0 | 8 | 0 |
| No 11—तपतीसंवरणम् **Tapatisamvarana** (Nataka) by Kulasekhara Varma with the commentary of Sivarama (*out of stock*). | 2 | 4 | 0 |
| No. 12—परमार्थसारम् **Paramarthasara** (Vedanta) by Adisesa with the commentary of Raghavananda (*out of stock*). | 0 | 8 | 0 |
| No. 13—सुभद्राधनञ्जयम् **Subhadradhananjaya** (Nataka) by Kulasekhara Varma with the commentary of Sivarama (*out of stock*) | 2 | 0 | 0 |
| No 14—नीतिसारः **Nitisara** (Niti) by Kamandaka, with the commentary of Sankararya (*out of stock*). | 3 | 8 | C |
| No. 15—स्वप्नवासवदत्तम् **Svapnavasavadatta** (Nataka) by Bhasa (*second edition*). | 1 | 8 | 0 |
| No. [illegible] | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् **Pancharatra** (Nataka) by Bhasa (*out of stock*). | 1 | 0 | 0 |
| No. 18—नारायणीयम् **Narayaniya** (Stuti) by Narayana Bhatta with the commentary of Desamangalavarya (*second edition*). | 4 | 0 | 0 |
| No 19—मानमेयोदयः **Manameyodaya** (Mimamsa) by Narayana Bhatta and Narayana Pandita (*out of stock*). | 1 | 4 | 0 |
| No. 20—अविमारकम् **Avimaraka** (Nataka) by Bhasa (*out of stock*). | 1 | 8 | 0 |
| No. 21—बालचरितम् **Balacarita** (Nataka) by Bhasa (*out of stock*) | 1 | C | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारो-रुभङ्गानि Madhyamavyayoga-Dutavakya-Dutaghatotkaca-Karnabhara and Urubhanga (Nāṭaka) by Bhāsa (*out of stock*). | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः Nanartharnavasamksepa (Kośa) by Keśavasvāmin (Part I, 1st and 2nd Kāṇḍas). (*out of stock*). | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः Janakiparinaya (Kāvya) by Cakra Kavi (*out of stock*). | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका Kanadasiddhantacandrika (Nyaya) by Gaṅgādharasūri (*out of stock*). | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् Abhisekanataka by Bhāsa (*out of stock*). | 0 | 12 | 0 |
| No. 27—कुमारसम्भवः Kumarasambhava (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (*Part I, 1st and 2nd Sargas*) (*out of stock*). | 1 | 12 | 0 |
| No. 28—वैखानसधर्मप्रश्नः Vaikhanasadharmaprasna (Dharmasūtra) by Vikhanas (*out of stock*). | 0 | 8 | 0 |
| No. 29—नानार्थार्णवसंक्षेपः Nanartharnavasamksepa (Kośa) by Keśavasvāmin (Part II, 3rd Kāṇḍa) (*out of stock*). | 2 | 4 | 0 |
| No. 30—वास्तुविद्या Vastuvidya (Śilpa) (*out of stock*) | 0 | 12 | 0 |
| No. 31—नानार्थार्णवसंक्षेपः Nanartharnavasamksepa (Kośa) by Keśavasvāmin (Part III, 4th, 5th and 6th Kāṇḍas). | 1 | 0 | 0 |
| No. 32—कुमारसम्भवः Kumarasambhava (Kāvya) by Kālidāsa with the two commentaries, Prakāśikā of Aruṇagirinātha and Vivaraṇa of Nārāyaṇa Paṇḍita (Part II, 3rd, 4th and 5th Sargas) (*out of stock*). | 2 | 8 | 0 |

| | RS | AS. | P. |
|---|---|---|---|
| No 33—वररुचसंग्रह Vararucasangraha (Vyākarana) with the commentary Dīpaprabhā of Nārāyana (*out of stock*) | 0 | 8 | 0 |
| No 34—मणिदर्पण Manidarpana (Nyāya) by Rajacūdāmanimakhin | 1 | 4 | 0 |
| No 35—मणिसार Manisara (Nyāya) by Gopīnātha | 1 | 8 | 0 |
| No 36—कुमारसम्भव Kumarasambhava (Kāvya) by Kālidāsa with the two commentaries, Prakāsikā of Arunagirinātha and Vivarana of Nārāyana Pandita (Part III, 6th, 7th and 8th Sargas) | 3 | 0 | 0 |
| No 37—आशौचाष्टकम् Asaucastaka (Smrti) by Vararuci with commentary | 0 | 4 | 0 |
| No 38—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the commentary Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part I, 1st Kānda) | 2 | 0 | 0 |
| No 39—चारुदत्तम् Carudatta (Nataka) by Bhāsa (*out of stock*) | 0 | 12 | 0 |
| No 40—अलङ्कारसूत्रम् Alankarasutra by Rājānaka Ruyyaka with the Alankārasarvasva of Mankhuka and its commentary by Samudrabandha (*second edition*) | 2 | 8 | 0 |
| No 41—अध्यात्मपटलम् Adhyatmapatala (Vedānta) by Āpastamba with Vivarana of Śrī Sankara Bhagavat Pāda (*out of stock*) | 0 | 4 | 0 |
| No 42—प्रतिमानाटकम् Pratimanataka by Bhāsa (*out of stock*) | 1 | 8 | 0 |
| No 43—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the two commentaries, Amarakośodghātana of Ksīrasvāmin and Tīkāsarvasva of Vandyaghatīya Sarvānanda (Part II, 2nd Kanda, 1-6 vargas) | 2 | 8 | 0 |
| No 44—तन्त्रशुद्धम् Tantrasuddha by Bhattāraka Vedottama (*out of stock*) | 0 | 4 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 45—प्रपञ्चहृदयम् Prapancahrdaya. | 1 | 0 | 0 |
| No. 46—परिभाषावृत्तिः Paribhasavrtti (Vyākaraṇa) by Nīlakaṇṭha Dīkṣita. | 0 | 8 | 0 |
| No. 47—सिद्धान्तसिद्धाञ्जनम् Sidhantasiddhanjana (Vedānta) by Kṛṣṇānanda Sarasvatī (Part I.) | 1 | 12 | 0 |
| No. 48—सिद्धान्तसिद्धाञ्जनम् Do. Do. (Part II). | 2 | 0 | 0 |
| No. 49—गोलदीपिका Goladipika (Jyotiṣa) by Parameśvara. | 0 | 4 | 0 |
| No. 50—रसार्णवसुधाकरः Rasarnavasudhakara (Alaṅkāra) by Singa Bhūpāla. | 3 | 0 | 0 |
| No. 51—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the two commentaries, Amarakośodghāṭana of Kṣīrasvāmin and Ṭīkāsarvasva of Vandyaghaṭīya Sarvānanda (Part III, 2nd Kanda, 7-10 vargas). | 2 | 0 | 0 |
| No. 52—नामलिङ्गानुशासनम् Namalinganusasana (Kośa) by Amarasimha with the commentary Ṭīkāsarvasva of Vandyaghaṭiya Sarvānanda (Part IV, 3rd Kāṇda). | 1 | 8 | 0 |
| No. 53—शब्दनिर्णयः Sabdanirnaya (Vedānta) by Prakāśātmayatīndra. | 0 | 12 | 0 |
| No. 54—स्फोटसिद्धिन्यायविचारः Sphotasiddhinyayavicara (Vyākaraṇa). | 0 | 4 | 0 |
| No. 55—मत्तविलासप्रहसनम् Mattavilasaprahasana (Nāṭaka) by Mahendravikramavarman. (*out of stock*). | 0 | 8 | 0 |
| No. 56—मनुष्यालयचन्द्रिका Manusyalayacandrika (Silpa) (*out of stock*). | 0 | 8 | 0 |
| No. 57—रघुवीरचरितम् Raghuviracarita (Kāvya). | 1 | 4 | 0 |
| No. 58—सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana (Vedānta) by Kṛṣṇānanda Sarasvatī (Part III). | 2 | 0 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 59—नागानन्दम् Nagananda (Nāṭaka) by Harṣadeva with the commentary Vimarśinī of Śivarāma (*out of stock*). | 3 | 4 | 0 |
| No. 60—लघुस्तुति Laghustuti by Laghubhaṭṭāraka with the commentary of Rāghavānanda. | 0 | 8 | 0 |
| No. 61—सिद्धान्तसिद्धाञ्जनम् Siddhantasiddhanjana (Vedānta) by Kṛṣṇānanda Sarasvatī (Part IV) | 1 | 4 | 0 |
| No. 62—सर्वमतसंग्रह Sarvamatasangraha (*out of stock*) | 0 | 8 | 0 |
| No. 63—किरातार्जुनीयम् Kiratarjuniya (Kāvya) by Bhāravi with the commentary Sabdarthadīpikā of Citrabhānu (1, 2 and 3 Sargas). | 2 | 9 | 0 |
| No. 64—मेघसन्देश Meghasandesa by Kālidāsa with the commentary Pradīpa of Dakṣiṇāvartanātha | 0 | 12 | 0 |
| No. 65—मयमतम् Mayamata (Śilpa) by Mayamuni (*out of stock*) | 3 | 4 | 0 |
| No. 66—महार्थमञ्जरी Maharthamanjari (Darśana) with the commentary Parimala of Maheśvarānanda | 2 | 4 | 0 |
| No. 67—तन्त्रसमुच्चय Tantrasamuccaya (Tantra) by Nārāyaṇa with the commentary Vimarśinī of Śaṅkara (Part I, 1–6 Paṭalās) (*out of stock*) | 3 | | |
| No. 68—तत्त्वप्रकाश Tattvaprakasa (Āgama) by Śrī Bhojadeva with the commentary Tātparyadīpikā of Śrī Kumāra | 1 | 12 | 0 |
| No. 69—ईशानशिवगुरुदेवपद्धति Isanasivagurudevapaddhati (Tantra) by Īśānaśivagurudevamiśra Part I, Sāmānyapāda) | 1 | 8 | 0 |
| No. 70—आर्यमञ्जुश्रीमूलकल्प Aryamanjusrimulakalpa (Part I). | 2 | 8 | 0 |
| No. 71—तन्त्रसमुच्चय Tantrasamuccaya (Tantra) by Nārāyaṇa with the commentary Vimarśinī of Śaṅkara (Part II, 7—12 Paṭalās) (*out of stock*) | 2 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 72—ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati (Tantra) by Īśānaśivagurudevamiśra (Part II, Mantrapāda). | 4 | 0 | 0 |
| No. 73—ईश्वरप्रतिपत्तिप्रकाशः Isvarapratipattiprakasa (Vedānta) by Madhusūdanasarasvatī. | 0 | 4 | 0 |
| No. 74—याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti with the commentary Bālakrīdā of Viśvarūpācārya (Part I — Ācāra and Vyavahāra Adhyāyas). | 3 | 4 | 0 |
| No. 75—शिल्परत्नम् Silparatna (Śilpa) by Śrīkumāra (Part I). | 2 | 12 | 0 |
| No. 76—आर्यमञ्जुश्रीमूलकल्पः Aryamanjusrimulakalpa (Part II). | 3 | 0 | 0 |
| No. 77—ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati (Tantra) by Īśānaśivagurudevamiśra (Part III, Kriyāpāda 1—30 Paṭalas). | 3 | 0 | 0 |
| No. 78—आश्वलायनगृह्यसूत्रम् Asvalayanagrhyasutra with the commentary Anāvilā of Haradattācārya. | 2 | 6 | 0 |
| No. 79—अर्थशास्त्रम् Arthasastra of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part I, 1 & 2 Adhikaraṇas). | 3 | 12 | 0 |
| No. 80—अर्थशास्त्रम् Do. Do. (Part II, 3—7 Adhikaraṇas). | 4 | 0 | 0 |
| No. 81—याज्ञवल्क्यस्मृतिः Yajnavalkyasmrti with the commentary Bālakrīdā of Viśvarūpācārya (Part II. Prāyaścittādhyāya). | 2 | 0 | 0 |
| No. 82—अर्थशास्त्रम् Arthasastra of Kauṭalya with commentary by Mahāmahopādhyāya T. Gaṇapati Śāstri (Part III, 8—15 Adhikaraṇas). | 3 | 4 | 0 |
| No. 83—ईशानशिवगुरुदेवपद्धतिः Isanasivagurudevapaddhati (Tantra) by Īśānaśivagurudevamiśra (Part IV, Kriyapāda 31—64 Paṭalas and Yogapāda). | 3 | 8 | 0 |

| | RS | AS | P. |
|---|---|---|---|
| No 84—आर्यमञ्जुश्रीमूलकल्प Aryamanjusrimulakalpa (Part III) | 2 | 0 | 0 |
| No 85—विष्णुसंहिता Visnusamhita (Tantra) | 2 | 8 | 0 |
| No 86—भरतचरितम् Bharatacarita (Kavya) by Krsnakavi. | 1 | 8 | 0 |
| No 87—सङ्गीतसमयसार Sangitasamayasara (Sangita) of Sangitakara Parsvadeva | 1 | 2 | 0 |
| No 88—काव्यप्रकाश Kavyaprakasa (Alankara) of Mammatabhatta with the two commentaries the Sampradayaprakasini of Sri Vidyacakravartin and the Sahityacudamani of Bhattagopala (Part I, 1–5 Ullasas) | 3 | 0 | 0 |
| No 89—स्फोटसिद्धि Sphotasiddhi (Vyakarana) by Bharatamisra | 0 | 8 | 0 |
| No 90—मीमांसाश्लोकवार्तिकम् Mimamsaslokavartika with the commentary Kasika of Sucaritamisra (Part I) | 2 | 8 | 0 |
| No 91—होराशास्त्रम् Horasastra of Varahamihiracarya with the Vivarana of Rudra | 3 | 0 | 0 |
| No 92—रसोपनिषत् Rasopanisat. | 2 | 0 | 0 |
| No 93—वेदान्तपरिभाषा Vedantaparibhasa (Vedanta) of Dharmarajadhvarindra with the commentary Prakasika of Peddadiksita | 1 | 8 | 0 |
| No 94—बृहद्देशी Brihaddesi (Sangita) of Matangamuni | 1 | 8 | 0 |
| No 95—रणदीपिका Ranadipika (Jyotisa) of Kumaraganaka | 0 | 4 | 0 |
| No 96—ऋक्संहिता Rksamhita with the Bhasya of Skandasvamin and the commentary of Venkatamadhavarya (Part I, 1st Adhyaya in 1st Astaka) | 1 | 8 | 0 |

| | Rs. | As. | P. |
|---|---|---|---|
| No. 97—नारदीयमनुसंहिता Naradiyamanusamhita (Smṛti) with Bhaṣya of Bhavasyāmin. | 2 | 0 | 0 |
| No. 98—शिल्परत्नम् Silparatna (Śilpa) by Śrīkumāra. (Part II) | 2 | 8 | 0 |
| No. 99—मीमांसाश्लोकवार्त्तिकम् Mimamsaslokavartika (Mīmamsā) with the commentary Kaśika of Sucaritamiśra (Part II). | 2 | 0 | 0 |
| No. 100—काव्यप्रकाशः Kavyaprakasa (Alaṅkāra) of Mammaṭabhaṭṭa with the two commentaries, Sampradāyaprakāśinī of Śrīvidyācakravartin and Sāhityacuḍāmaṇi of Bhaṭṭagopāla (Part II, 6—10 Ullāsas). | 5 | 0 | 0 |
| No. 101—आर्यभटीयम् Aryabhaṭīya (Jyotiṣa) of Āryabhaṭacarya with the Bhaṣya of Nīlakaṇṭhasomasutvan (Part I. Gaṇitapāda). | 2 | 8 | 0 |
| No. 102—दत्तिलम् Dattila (Saṅgīta) of Dattilamuni. | 0 | 4 | 0 |
| No. 108—हंससन्देशः Hamsasandesa (Vedanta) with commentary. | 0 | 8 | 0 |
| No. 104—साम्बपञ्चाशिका Sambapancasika (Stuti) with commentary. | 1 | 0 | 0 |
| No. 105—निधिप्रदीपः Nidhipradipa of Siddhaśrikaṇṭhaśambhu. | 0 | 4 | 0 |
| No. 106—प्रक्रियासर्वस्वम् Prakriyasarvasva. (Vyakaraṇa) of Srī Nārāyaṇa Bhaṭṭa with commentary (Part I.) | 1 | 0 | 0 |
| No. 107—काव्यरत्नम् Kavyaratna (Kavya) of Arhaddāsa | 0 | 12 | 0 |
| No. 108—बालमार्तण्डविजयम् Balamartandavijaya. (Nāṭaka) of Devarājakavi. | 1 | 8 | 0 |
| No. 103—न्यायसारः Nyayasara with the commentary of Vasudevasūri. | 1 | 8 | 0 |

| | RS. | AS. | P. |
|---|---|---|---|
| No. 110—आर्यभटीयम् Aryabhatiya (Jyotiṣa) of Āryabhaṭācārya with the Bhāṣya of Nīlakaṇṭhasomasutvan (Part II. Kālakriyāpāda) | 1 | 0 | 0 |
| No 111—हृदयप्रियः Hridayapriya (Vaidyaka) by Paramesvara. | 3 | 0 | 0 |
| No. 112—कुचेलोपाख्यानम् अजामिलोपाख्यानं च। Kucelopakhyana and Ajamilopakhyana. (Sangita) by H. H. Svati Sri Rama Varma Maharaja. | 0 | | 0 |
| No 113—सङ्गीतकृतयः Sangitakrtis (Gana) of H H Svati Sri Rama Varma Maharaja | 1 | 0 | 0 |
| No. 114—साहित्यमीमांसा Sahityamimamsa (Alankara) | 1 | | 0 |
| No. 115—ऋक्संहिता Rksamhita (with the Bhāṣya of Skandasvāmin and the commentary of Veṅkaṭamādhavārya) (Part II) 2nd Adhyaya in Ist Astaka | 1 | 8 | 0 |

*Apply to:—*
*The Curator*
*for the publication of Oriental Manuscripts,*
*Trivandrum.*